आचार्यः प्राङ्मुखो भूत्वा ध्यायेद्देवं चतुर्भुजम् ।
तूर्यमङ्गलघोषेण ब्रह्मघोषवरेण च ॥ १९ ॥
अर्घ्यं दद्यात् सुरश्रेष्ठ कुम्भतोयेन मन्त्रवित् ।
प्रगृह्य कर्करीं तावत् तद्गर्तं[18] पूरयेज् जलैः ॥ २० ॥
सर्वरत्नसमाकीर्णैर्विमलैः सुसुगन्धिभिः ।
तस्मिन् शुक्लानि पुष्पाणि प्रक्षिपेद् ओमिति स्मरन् ॥ २१ ॥
तदावर्तं परीक्षेत वेदाद्येनाक्षतं क्षिपेत् ।
शुभं स्याद् दक्षिणावर्तेऽशुभं वामे भवेत् ततः ॥ २२ ॥
बीजैः शालियवादीनां तं गर्तं पूरयेद् बुधः[19] ।
क्षेत्रजाभिः पवित्राभिर्मृद्भिर्गर्तं प्रपूरयेत् ॥ २३ ॥
एवं निष्पाद्य विधिना चार्घ्यदानं सुरोत्तम ।
सुवर्णं गां वस्त्रयुग्ममाचार्याय निवेदयेत् ॥ २४ ॥
कालज्ञस्थपती पूज्यौ वैष्णवान् शक्तितोऽर्चयेत् ।
ब्राह्मणान् भोजयित्वा च[20] गेयनृत्यादि[21] कारयेत् ॥ २५ ॥
ततस्तं खातयेद्[22] यत्नाज् जलान्तं यावदेव तु ।
पुरुषाधःस्थितं शल्यं न गृहे दोषदं भवेत् ॥ २६ ॥
प्रासादे दोषदं शल्यं भवेद् यावज्जलान्तिकम् ।
तस्मात् प्रासादिकी भूमिः शोध्या यावज्जलान्तिकम् ॥ २७ ॥
शिलान्तं कर्करान्तं वा यावद् वा भूः[23] कुमारिका ।
आकोट्य तां समीकृत्य ततो यागं[24] समारभेत्[25] ॥ २८ ॥

॥ १० ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे दशमोऽर्घ्यदानपटलः ॥ १० ॥

[18] सूत्रं –A. [19] ततः –B,C. [20] तु –B,C. [21] नृत्यगीतादि –B,C. [22] संक्षालयेद् –B,C. [23] भूर्वां –B,C. [24] यज्ञं –B,C. [25] समाचरेत् –B,C.

## एकादशः पटलः

श्रीभगवान् उवाच—

अतः परं प्रवक्ष्यामि प्रतिष्ठां पादसंज्ञिताम्[1] ।
अग्रतो मण्डपः कार्यश्चतुरस्रः सवेदिकः ॥ १ ॥
दशद्वादशहस्तो[2] वा चतुर्भागायतः शुभः ।
पताकाभिर्ध्वजैश्चित्रैः कदलीभिर्विभूषयेत् ॥ २ ॥
कुण्डानि कुर्याच्च चत्वारि तोरणानि यथाक्रमम् ।
कुम्भन्यासेष्टकान्यासौ[3] द्वारस्तम्भौ व्रतं तथा[4] ॥ ३ ॥
सर्वमेतत् तु कुर्वीत दिवसे तु सुशोभने ।
सर्वेष्वेव तु कर्तव्यं देवब्राह्मणपूजनम् ॥ ४ ॥
कालज्ञपूजनं चैव स्थपतीनां च पूजनम् ।
वास्तुकर्म न चारभ्यं वर्षाकाले विजानता ॥ ५ ॥
कृष्णपक्षे त्रिभागान्ते शुक्लस्यादौ द्वितीयके ।
चतुर्थीं नवमीं वर्ज्यं तिथिं चापि चतुर्दशीम् ॥ ६ ॥
भौमस्य तु दिनं वर्ज्यं करणं विष्टिसंज्ञितम् ।
क्षित्यन्तरीक्षदिव्योत्थैरुत्पातैर्भयपीडितम् ॥ ७ ॥
उपसृष्टं ग्रहैर्भं च व्यतीपातहतं तथा ।
चन्द्रतारानुकूले च[5] कार्य्यं कर्म विजानता ॥ ८ ॥
ध्रुवाणि चात्र शस्तानि नैरृतं शक्रदैवतम् ।
पुष्यं पौष्णं च सावित्रं वायव्यं वैष्णवं तथा ॥ ९ ॥
स्थिरांशे च स्थिरे लग्ने कर्तुश्चोपचयात्मके ।
केन्द्रे सौम्यो ग्रहो यस्य त्रिकोणे च[6] सुरत्तम ॥ १० ॥
पापाश्चोपचयस्थाने[(a)] तदा कार्यं समाचरेत् ।
यत्नेन वर्जयेत् पापं केन्द्रस्थं सर्वकर्मसु ॥ ११ ॥

[1] संश्रिताम् —A. [2] – हस्ता—A. [3] —न्यासे —B,C. ; ...न्यासेष्टका—dropped in D. [4] तोरणाश्रयमेव हि —B,C. [5] तु—B,C. [6] तु—B,C,D. (a) पापाश्चापचयस्थाने ?

सौम्ययुक्ते तु यत् केन्द्रं तादृक् पत्रं तु शून्यकम्[7]।
पूरयेत्[8] खातकं यत्नात् पादं पादं यथाक्रमम् ॥ १२ ॥
अष्टाङ्गुलं मृत्तिकया हस्तकं[9] चेष्टकादिभिः।
सिक्त्वा सिक्त्वा तु तोयेन कलसैः काञ्चनादिभिः ॥ १३ ॥
आकोटनं ततः कुर्याद् मुद्गरैर्ब्रह्मवृक्षजैः।
पादोनं पूरयेत् खातं सुषमं* चैव कारयेत् ॥ १४ ॥

... .... .... ....

देशिकः पञ्चगव्येन तां भूमिं प्रोक्षयेद् बुधः १५ ॥
सुवर्णव्रीहिगर्भेण चूतपल्लवशोभिना।
तीर्थतोयप्रपूर्णेण § स्वर्णताम्रमयेन वा ॥ १६ ॥
सेचयेदभिजप्तेन वारिणा कलसेन तु।
ततः शुद्धा भवेद् भूमिर्दोषयुक्तापि या भवेत् । १७ ॥
एवं भूमिं विशोध्याथ ततो वास्तु यजेद् बुधः।
ब्रह्मस्थानं स्थिरीकृत्य इष्टकाग्रहणं ततः ॥ १८ ॥
इष्टकानां प्रमाणं च लक्षणं साम्प्रतम् शृणु।
सुतला लक्षणोपेता द्वादशाङ्गुलसम्मिता ॥ १९ ॥
सुविस्तारविभागेन नैपुण्येन च सम्मिता।
सुपक्वाः सुप्रमाणास्ता एकवर्णा मनोहराः ॥ २० ॥
विमला इष्टकाः कार्याश्चतुरस्राः सुसम्मिताः।
छिन्नकर्णाश्चाप्रशस्ताः[10] पाणिपादविवर्जिताः ॥ २१ ॥
सशर्कराः कृष्णवर्णा अस्थ्यङ्गारचिताश्च याः।
विवर्णा मन्दगन्धाश्च याः पीनाः पिण्डिकाश्च[11] याः ॥ २२ ॥

[7] सौम्ययुक्तं तु पक्षेन्द्रं तज्ज्ञेयं न तु स्वल्पकम्—B.C. [8] पूरके -A. [9] हास्तिकं—A,D. * सुसमं—D. § सुपूर्णेन—D. [10] छिन्नकर्णा ह्यप्रशस्ताः—B.C. [11] पिण्डका—B.C.; the citation in वैदिकसर्वस्व reads—विवर्णा मन्दपक्वाश्च नेष्टा सा खण्डिता तु या; विवर्णा मन्दगन्धा च या पीना पिण्डिका तु या—D.

हीनाश्च विषमा भग्ना जर्जराश्च विवर्जिताः[क]।
कर्तव्यस्त्विष्टकान्यासः [ प्रासादे चेष्टकामये ॥ २३ ॥
शैले शिलानां विन्यासः ] कार्करे[12] कर्करां[13] न्यसेत्।
नवैव[14] परिगृह्णीयात् ताम्रकुम्भान् सुशोभनान् । २४ ॥
आहृत्य सर्वसम्भारान् इष्टकामधिवासयेत्।
ऐशान्यां मण्डपं[15] कृत्वा तद्वत् प्राच्यां[16] तु मण्डपम्। २५ ॥
कुम्भाना[*]मिष्टकानां च ततः स्नानं समाचरेत्।
अथ पञ्चकषायेण सर्वौषधिजलेन च । २६ ॥
गन्धतोयेन च तथा कुम्भैस्तोयप्रपूरितैः[17]।
हिरण्यव्रीहिसंयुक्तैर्गन्धचन्दनचर्चितैः ॥ २७ ॥
"आपो हि ष्ठे" ति तिसृभिः "शन्नो देवी" ति चाप्यथ।
"तरत्समन्दी" ति तथा "पावमानी" भिरेव च[18] ॥ २८ ॥
"उदुत्तमं वरुणे" ति "इमं मे" ति तथैव च।
"वरणस्ये" (?) § ति मन्त्रेण "हंसः शुचिसदि"[(b)] त्यपि ॥ २९ ॥
श्रीसूक्तेन तथा कुम्भैः स्नापयेदिष्टकान् तथा।
"श्रायन्ती"यं पठन् सूक्तं कुम्भांस्तान् स्नापयेद्[19] बुधः ॥ ३० ॥
ततोऽनुलेपनं कार्यं चन्दनेन सुगन्धिना।
आच्छादनं ततः कुर्याद् वासोभिः कुसुमैस्ततः[20] ॥ ३१ ॥
शय्यायां तु प्रकृष्टायां मण्डपे स्थाप्य पूजयेत्।
नानाभक्ष्यौदनैश्चैव गन्धैः पुष्पैर्मनोहरैः ॥ ३२ ॥
धूपं दीपं च नैवेद्यं तेषां यत्नान्निवेदयेत्।
एवं कृत्वा ततः सम्यग् इष्टकाहोममाचरेत् ॥ ३३ ॥

[क] हीना च ..जर्जरा च—D. [ ] This portion is omitted in D. [12] कर्करे—B,C. [13] कर्करा—A. [14] नवैवं -B,C. [15] मण्डलं —B,C. [16] स्नपनार्थाय —B,C. [*] कुष्टानां—citation in the वैदिकसर्वस्व। [17] सुपूरितैः—A. [18] This line is omitted in A. § वरुणस्येति ? —Atharvaveda, X. 5. 10. (b) 'शुचिषद्' seems to be the proper reading. [19] स्थापयेद्—B,C. [20] तथा—B,C.

तस्मिंस्तु मण्डपे लिख्य वैष्णवं* मण्डलं शुभम् ।
विष्णुं[21] समर्चयेन् तत्र कुण्डेऽग्निं जुहुयात् ततः ॥ ३४ ॥
वैष्णवाग्निं जनित्वादौ[22] यथाविधि समाहितः ।
कुर्याच् च समिधाधानं द्वादशाक्षरविद्यया ॥ ३५ ॥
आघारा[ख]वाज्यभागौ तु प्रणवेनैव कारयेत् ।
अष्टाक्षरैस्ततो व्यस्तैः कुर्यादष्टाहुतीः क्रमात् ॥ ३६ ॥
आज्यं व्याहृतिभि[23]र्हुत्वा लोकेशानां क्रमेण तु ।
अग्नये चैव सोमाय ग्रहेभ्य इति चैव हि ॥ ३७ ॥
"पुरुषोत्तमायेति" हुत्वा व्याहृती[24]र्जुहुयात् ततः ।
प्रायश्चित्तं ततो हुत्वा दद्यात् पूर्णाहुतिं ततः ॥ ३८ ॥
द्वादशाक्षरमन्त्रेण वेदाद्यैरथवानघ ।
कुण्डेषु मूर्तिपाः सम्यग् जुहुयुः सघृतांस्तिलान् ॥ ३९ ॥

॥ ११ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
एकादशः शिलाधिवासनपटलः ॥ ११ ॥

## द्वादशः पटलः

श्रीभगवान् उवाच—

कुम्भन्यासं ततः कुर्यादिष्टकान्यासमेव च ।
देशिकः प्राङ्मुखो भूत्वा सर्वालङ्कारभूषितः ॥ १ ॥
विलिप्य गोमयैर्भूमिं विन्यसेत् कलसान् नव ।
अष्टदिक्षु यथान्यायं मध्ये चैकं तथा न्यसेत् ॥ २ ॥

*भद्रार्थ्यं—वैदिकसर्वस्व । [21] विष्णुमभ्यर्चयेत् -B,C. [22] जनेदादौ—B,C. [ख] अघारा —D.
[23] स्वाकृतिभि—A. [24] व्याहृतिभिः B,C.

पञ्चरत्नसमायुक्तान् मङ्गलौषधिसंयुतान्[1] ।
पारदेन समायुक्तान् कृत्वा वस्त्रेण भूषितान्[2] ॥ ३ ॥
पद्मं[3] चैव महापद्मं मकरं कच्छपं तथा ।
मुकुन्दं च तथानन्दं नीलं शङ्खं च पद्मिनीम् ॥ ४ ॥
एतास्तु देवताः कुम्भे न्यसनीया यथाक्रमम् ।
एवं विन्यस्य कलसान् पुनर्नैतान् प्र[4]चालयेत् ॥ ५ ॥
कुम्भस्योपरि विन्यस्य इष्टकाष्टौ यथाक्रमम् ।
ऐशाने च तथा कोणे इष्टकां प्रथमां[5] न्यसेत् ॥ ६ ॥
प्रदक्षिणं ततो देव इष्टकान्यास उच्यते ।
शक्तयो विमलाद्यास्तु इष्टकानां तु देवताः ॥ ७ ॥
न्यसनीया यथान्यायं मध्ये न्यस्यास्त्वनुग्रहा ।
"अव्यङ्गे चाक्षते पूर्णे मुनेरङ्गिरसः सुते ॥ ८ ॥
इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहम् ।"
मन्त्रेणानेन विन्यस्य इष्टकां देशिकोत्तमः ॥ ९ ॥
गर्भाधानं ततः कुर्यान्मध्यस्थाने समाहितः ।
कुम्भोपरिष्टाद् देवेश पद्मिनी यस्य देवता ॥ १० ॥
गृह्णीयान्मृत्तिकां देव दशस्थानेषु देशिकः ।
समुद्रे पर्वते नद्यां ह्रदे तीर्थे खले तथा ॥ ११ ॥
कुलीरवासे वल्मीके विषाणाग्रे वृषस्य च ।
कुञ्जरस्य विषाणाग्रे स्थानेष्वेषु पृथक् पृथक् ॥ १२ ॥
रक्तोत्पलस्य पद्मस्य तथा नीलोत्पलस्य च ।
कुमुदस्य सुरश्रेष्ठ गृह्णीयान्मूलमुत्तमम् ॥ १३ ॥
मनःशिलां सीसकं च हरितालं रसा[6]ञ्जनम् ।
सौराष्ट्रीं रोचनां गन्धं पारदं गैरिकं तथा ॥ १४ ॥

[1] This line is omitted in B. [2] वेष्टितान्—B.C. [3] शङ्खं—A. [4] न चालयेत्—B.C. [5] प्रथमं—B.C. [6] तथा—B.C.D.

वज्रं[7] च मौक्तिकं चैव वैदूर्यं शङ्खमेव च।
स्फटिकं पुष्परागं च चन्द्रकान्तं तथैव च ॥ १५ ॥

.... .... .... ....

महानीलं पद्मरागं गृह्णीयाद् यत्नतो बुधः ॥ १६ ॥
शालिनीवारनिष्पावयवमुद्गकुलत्थकान्।
तिलगोधूमकुल्मापान् गृह्णीयाद् देशिकोत्तमः ॥ १७ ॥
सुवर्णं रजतं शुल्व[8]मायसं त्रपुकं तथा
कूर्मं शेषं तथा पद्मं शङ्खं चक्रं तथा धनुः ॥ १८ ॥
गदां चैव महाभाग सर्वं कुर्याद्धिरण्मयम्।
सर्वमेतत्[9] समानीय न्यसेद् वै गर्भभाजने ॥ १९ ॥
द्वादशाङ्गुलविस्तारं चतुरङ्गुलमुच्छ्रितम्।
श्लक्ष्णमस्फुटितं चैव पद्माकारं सुशोभनम् ॥ २० ॥
चान्द्रं रौप्यं तथा शौल्वं[10] प्रशस्तं गर्भभाजनम्।
ब्रह्मस्थाने तु यत् कुम्भं न्यस्तं श्रीदैवतं पुरा ॥ २१ ॥
तदूर्ध्वं नेत्रपट्टं च[11] दत्त्वा गोमूत्रप्रोक्षणम्[12]।
तदूर्ध्वं ब्राह्मणानां तु विन्यसेद् गर्भभा[13]जनम् । २२ ।
क्षत्रियाणां विशां चैव शूद्राणां च पटं विना।
विमलं भाजनं कृत्वा पञ्चगव्येन शोधयेत् ॥ २३ ॥
हस्ताभ्यां परिगृह्याथ तस्मिन्नेव विचिन्तयेत्।
अथ भूमण्डलं सर्वं ससमुद्रं [14]सपर्वतम् ॥ २४ ॥
दिग्द्विपेन्द्रसमायुक्तमनन्तस्योपरिस्थितम्।
एवं ध्यात्वा तु पृथिवीं भाजनो[15]परि कल्पयेत् ॥ २५ ॥
मृदं समुद्रजां गृह्य वृत्तिं[16] कुर्यात् प्रदक्षिणम्।
पार्वती पूर्वतः कार्या नदीजा दक्षिणे तथा। २६ ॥

[7] रक्तं—A [8] शुल्कं—B,C. [9] एतं—A. [10] शुल्वं—A,D. [11] तु—B,C [12] प्रोक्षितम्—B,C,D. [13] दर्भ—B; कुम्भ C. [14] सपवित्रं—C. [15] भाजन—B,C. [16] वृत्तं—A,D.

ह्रदजा पश्चिमे भागे तीर्थजा चोत्तरे तथा[क]।
आग्नेय्यां खलजा कार्या नैर्ऋत्यां तु कुलीरजा ॥ २७ ॥
वल्मीकजा तु वायव्यामैशान्यां वृषशृङ्गजा।
नागदन्तोद्भवा मध्ये न्यसनीया यथाक्रमम् ॥ २८ ॥
रक्तोत्पलस्य पूर्वे तु दक्षिणे पद्ममूलकम्।
प्रत्यङ्नीलोत्पलस्योक्तमुत्तरे कुमुदस्य च ॥ २९ ॥
मनःशिलादि धातूनि पूर्वादिक्रमतो न्यसेत्।
वज्रादिरत्नजातानि तेनैव क्रमयोगतः ॥ ३० ॥
शाल्यादीनि च बीजानि तत्रैव विनि[17]योजयेत्।
सुवर्णं पूर्वतः कार्यं रजतं दक्षिणे तथा ॥ ३१ ॥
आयसं पश्चिमे भागे त्रपुकं चोत्तरे तथा।
आग्नेय्यां कूर्मरूपं तु अनन्तं नैर्ऋते तथा ॥ ३२ ॥
वायव्यामथ पद्मं तु शङ्खमीशानगोचरे[ख]।
धनुश्चक्रं गदां चैव ब्रह्मस्थाने निवेशयेत् ॥ ३३ ॥
एवं कृत्वा समायोगं[18] प्रोक्ष्य द्वादशविद्यया।
अथ[19] दक्षिणतः स्थाप्य होमकर्म समारभेत् ॥ ३४ ॥
द्वादशाज्या[20]हुतिं हुत्वा द्वादशाक्षरविद्यया।
तथाष्टलोकपालेभ्यस्तथा नारायणाय च ॥ ३५ ॥
बीजेभ्यः[21] सर्वधातुभ्यः सर्वलोकेभ्य एव च।
नदीसमुद्रतीर्थेभ्यः पर्वतेभ्यस्तथैव च ॥ ३६ ॥
ह्रदेभ्यश्च गणेभ्यश्च पातालेभ्यस्तथैव च[22]।
वृषेभ्यो दिग्गजेभ्यश्च नागेभ्यः सुर[23]सत्तम ॥ ३७ ॥

[क] यथा—D. [17] समयोजयेत्—A. [ख] ...मीशान एव च—A,B,C. [18] समायुक्तं—B,C. [19] अथो—B,C,D. [20] द्वादशाज्याहुतीः—B,C. [21] सर्वेभ्यः—B,C. [22] B omits this line. [23] नागेभ्यश्च सुरोत्तम—B,C.

व्याहृत्या[24] चापि जुहुयात् स्वाहाकारान्तयुक्तया
प्रतिपत्त्या[25]हुतिं कुर्यात् संपातविधिनैव च ॥ ३८ ॥
गर्भभाजनमध्ये तु संपाताज्यं समापयेत् ।
पिधाय भाजनं तत्[26] गृहीत्वाग्रकरेण च ॥ ३९ ॥
जपेदष्टाक्षरं मन्त्रं द्वादशाक्षमेव च ।
जप्त्वा च प्राङ्मुखो भूत्वा ध्यायेच्[27] च मनसा भुवम् ॥ ४० ॥
ध्यात्वा तु सकलां भूमिमिमं मन्त्रमुदीरयेत्
"एकान्ते सर्वभूभागे पर्वतासनमण्डिते ॥ ४१ ॥
समुद्रपरिधाने त्वं देवि गर्भं समाचर[28] ।
नन्दे नन्दय वाशिष्ठे वसुभिः प्रजया सह ॥ ४२ ॥
जये भार्गव*-दायादे प्रजानां विजयावहे ।
पूर्णेऽङ्गिरसदायादे पूर्णकामं कुरुष्व माम् ॥ ४३ ॥
भद्रे काश्यपदायादे कुरु भद्रां मतिं मम ।
सर्वबीजसमायुक्ते सर्वरत्नौषधीवृते ॥ ४४ ॥
जयस्व रुचिरे नन्दे वाशिष्ठे रम्यतामिह ।
प्रजापतिसुते देवि चतुरस्रे महीयसि ॥ ४५ ॥
सुभगे सुप्रदे भद्रे गृहे काश्यपि रम्यताम् ।
पूजिते परमाचार्यैर्गन्धमाल्यैरलङ्कृते ॥ ४६ ॥
भव भूतिकरी देवि गृहे भार्गवि रम्यताम् ।
[ अव्यक्ते चाक्षते पूर्णे मुनेरङ्गिरसः सुते ॥ ४७ ॥
इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहम् । ][29]
देशस्वामि-पुरस्वामि-गृहस्वामि-परिग्रहे ॥ ४८ ॥
मनुष्यधनहस्त्यश्व-पशुवृद्धिकरी भव ।"
एवमुक्त्वा ततः श्वभ्रं गोमूत्रेण तु प्रोक्षितम् ॥ ४९ ॥

[24] आहुत्या—A. [25] प्रतिपाद्या—B,C. [26] तन्तु—B,C,D. [27] ध्यात्वा—B,C.
[28] समाश्रय—C,D. * भार्गवि—D. [29] These two lines are omitted in B,C.

कृत्वा नियमयेद्[30] गर्भं[31] सर्वकल्याणसंयुतम् ।
गर्भाधानं भवेद् रात्रौ सुवर्णं दक्षिणा भवेत् ॥ ५० ॥
तथा पयस्विनीं गां च वस्त्रयुग्मं तथैव च ।
मूर्तिपानां च दातव्या तथा धेनुः पयस्विनी । ५१ ॥
एवं गर्भं तु विन्यस्य तदूर्ध्वं नवमिष्टकाम्[(a)] ।
यस्य यन्त्रावृतो[32] गर्भमिष्टकाभिस्तु पूरयेत् ॥ ५२ ॥
पीठबन्धमतः कुर्यान्महा[33]प्रासादमानतः ।
पीठोत्तमं चोच्छ्रयेण प्रासादस्यार्धमानतः ॥ ५३ ॥
पादहीनं मध्यमं स्यात् कन्यसं चोर्ध्वमानतः ।
उत्तमं वासुदेवस्य कुर्यात् पीठं विचक्षणः ॥ ५४ ॥
अन्येषां स्वेच्छया कुर्यात् पीठं शृणु विशेषतः ।
चतुर्मुखेशसूर्याणामुत्तमं पीठमुच्यते ॥ ५५ ॥
पीठबन्धोपरिष्टात् तु वास्तुयज्ञं पुनर्यजेत् ।
य इमां सकलां कुर्यात् प्रतिष्ठां पादसं[34]श्रिताम् ॥ ५६ ॥
सर्वपाप[35]विनिर्मुक्तो विष्णुलोके महीयते ।
मरणं च[36] व्रजेन्मर्त्यो यः कृत्वा प्रथमेष्टकाम् ॥ ५७ ॥
स समाप्तस्य यज्ञस्य फलमाप्नोत्यसंशयः ।
देवागारं करोमीति मनसा यस्तु चिन्तयेत् ॥ ५८ ॥
तस्य कायगतं पापं तदह्ना[37] विप्रणश्यति ।
कृते तु किं पुनस्तस्य प्रासादं विधिनैव तु ॥ ५९ ॥
अष्टेष्टकासमायुक्तं यः कुर्याद् वैष्णवं गृहम् ।
न तस्य फलसम्पत्तिर्वक्तुं शक्येत केनचित् ॥ ६० ॥

[30] निधापयेद्—B,C. [31] गर्तं—A. (a) नवम् is apparently a solecism for नवाम् । [32] यस्य seems to be a scribal error for न्यस्य ; वस्त्राहृतो—B,C. यन्त्राहृतं ? [33] महत् -A. [34] संज्ञिनाम्—B,C. [35] सर्वपापैर्विनिर्मुक्तो—B,C. [36] न—A. [37] तदग्रे—B,C.

अनेनैवानुमेयं हि फलं प्रासादविस्तरात्।
ग्राममध्ये च पूर्वे च प्रत्यग्द्वारं प्रकल्पयेत्॥ ६१॥
विदिशासु च सर्वासु तथा प्रत्यङ्मुखं भवेत्।
दक्षिणे चोत्तरे चैव पश्चिमे प्राङ्मुखं भवेत्॥ ६२॥
॥ १२॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे द्वादशः पातालयागपटलः॥ १२॥

## त्रयोदशः पटलः

श्रीभगवान् उवाच —

प्रासादं संप्रवक्ष्यामि सर्वसाधारणं शृणु।
चतुरस्रीकृतं क्षेत्रं भजेत्[1] षोडशधा पुनः॥ १॥
मध्ये तस्य चतुर्भिस्तु कुर्यादायसमन्वितम्।
द्वादशैव तु भागानि[2] भित्त्यर्थं[3] परिकल्पयेत्॥ २॥
जङ्घोच्छ्रायं तु कर्तव्यं चतुर्भागेन चायतम्।
जङ्घयोर्द्विगुणोच्छ्रायं मञ्जर्याः कल्पयेद् बुधः। ३॥
चतुर्भागेन मञ्जर्याः कार्या सम्यक् प्रदक्षिणा।
तन्मानं[4] निर्गमं कार्यमुभयोः पार्श्वयोः समम्॥ ४॥
शिखरेण समं कार्यमग्रे[5] जगति विस्तरम्।
द्विगुणेनापि कर्तव्यं यथाशोभानुरूपतः॥ ५॥
विस्तारं मण्डपस्याग्रे गर्भं सूत्रद्वयेन तु
दैर्घ्यात् पादाधिकं कुर्यात्[6] मध्ये स्तम्भैर्विभूषितम्॥ ६॥

[1] भवेत्—A. [2] भागादि—B,C. [3] भित्त्यस्रं—A. [4] तन्माना B,C.; तन्मान—D.
[5] कार्यमान—B.C. [6] कार्यं B.C.; दैर्घ्यात् पादाधिके कुर्यात्—E.

प्रासादगर्भमानं वा कुर्वीत मुखमण्डपम् ।
एकाशीतिपदैर्वास्तुं यष्ट्वा मण्डपमारभेत् ॥ ६ ॥
शुकाढ्य[7]द्वारविन्यासे पादान्त[क] स्थान् यजेत् सुरान् ।
तथा प्राकारविन्यासे यजेद्द्वात्रिंशदन्तगान् ॥ ८ ॥
सर्वसाधारणं चैतत् प्रासादस्य तु लक्षणम् ।
मानेन प्रतिमाया वा प्रासादमपरं शृणु ॥ ९ ॥
प्रतिमायाः प्रमाणेन कर्तव्या पिण्डिका शुभा ।
गर्भस्तु पिण्डिकार्धेन गर्भमानास्तु भित्तयः ॥ १० ॥
भित्तेरायाममानेन उच्छ्रायं तु प्रकल्पयेत् ।
भित्त्युच्छ्रायं[ख] तु द्विगुणं शिखरं कल्पयेद् गुरुः[8] ॥ ११ ॥
शिखरस्य तु तुर्येण भ्रमणं परिकल्पयेत् ।
शिखरस्य चतुर्थेन अग्रतो मुखमण्डपम् ॥ १२ ॥
अष्टमांशेन गर्भस्य रथकानां तु निर्गमः ।
परिधेर्गुणभागेन रथकांस्तत्र कल्पयेत् ॥ १३ ॥
तत्तृतीयेन वा कुर्यात् रथकानां तु निर्गमम्[9] ।
रामत्रयं स्थापनीयं रथकत्रितये सदा ॥ १४ ॥
शिखरार्थं हि सूत्राणि रत्नानि विनिपातयेत् ।
शुकनासोर्ध्वतः सूत्रं तिर्यक्सूत्रं निपातयेत्[10] ॥ १५ ॥
शिखरस्यार्धभागस्थं सिंहं तत्र च कारयेत् ।
शुकनासां स्थिरीकृत्य मध्यसन्धौ विधारयेत्[11] ॥ १६ ॥
अपरे च तथा पार्श्वे तद्वत् सूत्रं निधापयेत् ।
तदूर्ध्वं तु भवेदीशं कण्ठे श्यामलसारवान्[12] ॥ १७ ॥
स्कन्धभग्नं[13] न कर्तव्यं विकरालं तथैव च ।
ऊर्ध्वं तु वेदिकामानात् कलसं परिकल्पयेत् ॥ १८ ॥

[7] शुकाढ्या –B,C. [क] पदान्त -D. [ख] भित्त्युच्छ्रयं—D. [8] बुधः—B,C. [9] निर्गमः—A,D. [10] A and E omit this line. [11] विदाचयेत्—B,C. [12] कण्ठो मनसा वरान्—B,C ; कण्ठोऽस्य मनसा वरान् –A,D,F. [13] भग्नस्कन्धन्तु—A ; स्कन्धभग्नं तु -E,F.

विस्तारं द्विगुणद्वारं[14] कर्तव्यं तु सुशोभनम् ।
जातरूपं .... .... .... .... .... स्वरैः[15] ॥ १९ ॥
औम्बरा[16]ऽधतः स्वर्णं दत्त्वा शाखां न्यसेद् बुधः ।
तूर्यमङ्गलघोषेण ब्राह्मणान् स्वस्तिवाच्य च ॥ २० ॥
द्वारस्य तु चतुर्थांशे कार्यौ चण्डप्रचण्डकौ ।
दण्डहस्तौ तु कर्तव्यौ विष्वक्सेनोपमावुभौ ॥ २१ ॥
शाखार्धं न्यस्य रत्नानि न्यसेदूर्ध्वमुदुम्बरम्[17] ।
तस्य मध्ये स्थिता देवी साक्षाल्लक्ष्मी सुरेश्वरी ॥ २२ ॥
कर्तव्या दिग्गजैः सा तु स्नाप्यमाना[18] घटेन तु ।
शाखोदुम्बरकौ कार्यौ पत्रवल्ल्यादिभूषितौ[19] । २३ ॥
एकशाखं त्रिशाखं वा षट्शाखं द्वारमिष्यते ।
नवशाखं च कुर्वीत अत ऊर्ध्वं न कारयेत् ॥ २४ ॥
विष्णववताररूपाद्यैः शाखां यत्नाद् विभूषयेत् ।
प्रासादस्य चतुर्भागैः प्राकारस्योच्छ्रयो भवेत् ॥ २५ ॥
प्राकारात् पादहीनं तु गोपुरस्योच्छ्रयो भवेत्[20] ।
पञ्चहस्तस्य देवस्य एकहस्ता तु पीठिका ॥ २६ ॥
तस्मात् तु द्विगुणः प्रोक्तस्तथा गरुडमण्डपः ।
एकहस्तादि कुर्वीत त्रिंशद्धस्तान्तमेव च ॥ २७ ॥
एकभूम्यादिकं कुर्यात् सप्तभूम्यन्तमेव च[21] ।
वायव्यां नागनाम्ना तु विष्णवे चैकभूमिकम् ॥ २८ ॥
द्विभौमिकं तथाग्नेयं माहेन्द्रं तु त्रिभौमिकम् ।
चतुर्भागं तु वारुण्यां सौरं स्यात् पञ्चभौमिकम् ॥ २९ ॥
सौम्यं षाड्भौमिकं[22] ज्ञेयं वैष्णवं सप्तभौमिकम् ।
गरुत्वन्तं[23] तथा कुर्यादुपरिष्टाच्चतुर्दिशम्[24] ॥ ३० ॥

[14] द्विगुणं द्वारं—B,C. [15] There are some lacunae in the mss. here. A B, C,D,F show—जातरूपं ..स्वरैः। E omits the line. [16] ऊडुम्बरो A. [17] ऊडुम्बरम् —B,C. [18] स्थाप्यमाना -B,C. [19] पित्र्यवन्त्यादिभूषितौ -A. [20] A omits this line. [21] A omits this line. [22] षड्भौमिकं—B,C. [23] गुरुत्वन्तं –A. [24] चतुर्गुणं—A,D.

कुर्याद्धि प्रतिमायामान् दिक्षु चाष्टासु चोपरि ।
महावराहमैन्द्र्यां तु नरसिंहं तु दक्षिणे ॥ ३१ ॥
प्रतीच्यां श्रीधरं देवमुदीच्यां हयशीर्षकम् ।
आग्नेय्यां जामदग्न्यं तु[ग] नैरृते राममेव च ॥ ३२ ॥
वामनं चैव वायव्यां वासुदेवमथापरे ।
पूर्वभूमौ तु शयनं द्वितीये चाशनं[25] भवेत् ॥ ३३ ॥
स्थानमेव तृतीये तु चतुर्थे यानमेव च ।
पञ्चमे योग[26]निद्रा तु षष्ठे योगासनं भवेत् ॥ ३४ ॥
स्थान[27]योगसमायुक्तं सप्तमे परिकल्पयेत् ।
नानागवाक्षकैर्यत्नात् पत्रवल्ल्यादिभूषितम् ॥ ३५ ॥
नानाप्रकारपुष्पाद्यैर्यथाशोभं प्रकल्पयेत् ।
कनिष्ठमध्यज्येष्ठानां प्रासादानां यथाक्रमम् ॥ ३६ ॥
वसुभार्गवविद्वद्भिः[28] प्रदेया रचना बुधैः[क] ।
द्वारस्य चाष्टमे युक्ते नवमे दशमे तथा ॥ ३७ ॥
ललाटवेधो नैव[29] स्यादार्यं तु शृणु साम्प्रतम् ।
यावद्धस्तैरभिप्रेतः प्रासादः कर्तृणानघ ॥ ३८ ॥
तावद्भिरङ्गुलैरायो वसुभागेन वा भवेत् ।
एकस्तम्भो ध्वजो ज्ञेयो द्विस्तम्भा वेदिका मता ॥ ३९ ॥
दश[30]भूम्यन्तरे नित्यं चतुःस्तम्भं प्रकल्पयेत् ।
तोरणस्य विधानं च कथितं तु तवानघ ॥ ४० ॥
प्रसादाग्रे यदा कार्या वेदिका स्तम्भसंयुता ।
वैष्णवैस्तु तदा कार्या वेदिका स्तम्भसंयुता ॥ ४१ ॥

॥ १३ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे त्रयोदशः प्रासादलक्षणपटलः ॥ १३ ॥

[ग] च—D. [25] चासनं —B,C. [26] याग—A. [27] ध्यान—B,C. [28] The text here is mulilated in the mss. वसुभार्गवकृत्विग्भिः—D,E. [क] शुभा—F. [29] नैर्वं—A,D. [30] कुश —B,C.

## चतुर्दशः पटलः

श्रीभगवान् उवाच —

अतः परं प्रवक्ष्यामि प्रासादानां[क] तु लक्षणम् ।
यथा येषु सुराः स्थाप्यास्तच्छृणुष्व ममानघ ॥ १ ॥
पञ्चायतनमध्ये तु वासुदेवं निवेशयेत् ।
आग्नेये नैर्ऋते चैव वायव्यां त्वीशगोचरे ॥ २ ॥
वामनं नरसिंहं च हयशीर्षं नृशूकरम् ।
स्थापयीत[1] यथान्यायमपरं शृणु मेऽनघ ॥ ३ ॥
मध्ये नारायणं[2] स्थाप्य[3] आग्नेय्यामम्बिकां न्यसेत् ।
नैर्ऋत्यां भास्करं स्थाप्य वायव्यां कमलोद्भवम् ॥ ४ ॥
ऐशान्यां स्थापयेल्लिङ्गमथवा रुद्ररूपकम्
नवायतनमध्ये तु वासुदेवं निवासयेत् । ५ ॥
पूर्वादीशानपर्यन्तं रामादीन् विन्यसेत् पुनः ।
इन्द्रादीन् वा लोकपालानष्टदिक्षु यथाक्रमम् ॥ ६ ॥
अथवान्यप्रकारेण नवायतनमुच्यते ।
पञ्चायतनसंस्थाने वडभ्यो यत्र मध्यमाः[4] ॥ ७ ॥
पुरुषोत्तममूर्तिस्तु मध्ये स्थाप्या विचक्षणैः ।
पूर्वगायां वडभ्यां च लक्ष्मीवैश्रवणौ न्यसेत् ॥ ८ ॥
दक्षिणस्यां वडभ्यां तु न्यसेन्मातृगणं बुधः ।
ईशानं च[5] तथा स्कन्दं गणेशं चात्र विन्यसेत् ॥ ९ ॥
पश्चिमायां वडभ्यां तु सूर्यादीन् विन्यसेद् ग्रहान् ।
उत्तरस्यां वडभ्यां तु मत्स्यादीन् विन्यसेद् दश ॥ १० ॥
आग्नेय्यां चण्डिका स्थाप्या नैर्ऋत्यामम्बिकां न्यसेत् ।
सरस्वतीं तु वायव्यां पद्मामीशानगोचरे ॥ ११ ॥

[क] प्रासादस्य —D, F. [1] स्थापनीयं —B C. [2] नारायणः—B,C. [3] स्थाप्यं —B,C
[4] मध्योगा —B. [5] ईशानश्च न —A.

मध्ये च[6] स्थापयेद् देवीं (वं ?) वासुदेवं यथोदितम् ।
नारायणं श्रीधरं वा[7] वामनं मोहनाशनम् ॥ १२ ॥
द्वादशायतनं तत् तु[8] मध्यमं तु त्रयोदश ।
अस्मिन् देवविभागानि[9] शृणुष्व सुरसत्तम ॥ १३ ॥
विश्वरूपं न्यसेन्मध्ये केशवादीन् प्रदक्षिणम् ।
पूर्वाद्यनुक्रमेणैव यथावद् विनिवेशयेत् ॥ १४ ॥
यां मूर्त्तिं स्थापयेन्मध्ये तत्स्थाने मध्यमां न्यसेत् ।
कामनाभेदतश्चायं वेधः साधारणः स्मृतः ॥ १५ ॥
प्रासादलक्षणं प्रोक्तं संक्षेपेण मया तव ।
तथैवान्येऽपि कर्तव्या येऽस्मिन् संकीर्तिता[क] मया ॥ १६ ॥

॥ १४ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके आदिकाण्डे चतुर्दशः प्रासाद-[10]देवतासंस्थापनपटलः ॥ १४ ॥

## पञ्चदशः पटलः

श्रीभगवान्* उवाच —

शिलाया लक्षणं वक्ष्ये तदिहैकमनाः शृणु ।
मृन्मयी दारुघटिता लौहजा[1] रत्नजा तथा ॥ १ ॥
शैलजा गन्धजा चैव कौसुमा[2] सप्तमी तथा[3] ।
कौसुमा रत्नजा[4] चैव मृन्मयी प्रतिमा हिता ॥ २ ॥
तत्कालपूजिताश्चैताः[5] सर्वकामफलप्रदाः ।
अथ शैलमयीं वक्ष्ये शिला यत्र प्रपूज्यते[6] ॥ ३ ॥

[6] तु—B,C. [7] च—B,C. [8] यत्र—B,C. [9] वितानानि—B,C. [क] ये तस्मिन् कीर्तिता —D. [10] 'प्रासाद'—is omitted in A,B,C. * Some mss. drop श्री all through.
[1] लौहजा—B,C. [2] कौमुदी—A ; कौसुमी D,F. [3] स्मृता—A,D,F. [4] कौसुमा गन्धजा—B,C. ; कौसुमी—D. [5] शैव—B,C. [6] च पूज्यते—A,F.

त्रिकूटे मन्दरे चैव शङ्करस्य पुरे गिरौ ।[7]
माल्यवत्पर्वते चैव मलये गन्धमादने ॥ ४ ॥
दशैतेषु शिला ग्राह्या अलाभे चापरान् शृणु ।[8]
श्रीगिरौ कैकटे[क] चैव किष्किन्धे[9] रैवते तथा ॥ ५ ॥
मन्दरे चैव माहेन्द्रे कैलासे विन्ध्यपर्वते ।
चित्रकूटे तथा श्वेते दर्दुरे सह्यपर्वते[10] ॥ ६ ॥
एतेष्वपि शिला ग्राह्याः पुण्येष्वन्येष्वपि द्विजाः[11] ।
पर्वतानामभावे तु गृह्णीयाद् भूगतां शिलाम् ॥ ७ ॥
आग्नेयी वायवी चैव माहेन्द्री वारुणी तथा ।
चतस्रो भूमयः प्रोक्तास्तासां वक्ष्यामि लक्षणम् ॥ ८ ॥
ब्रह्मवृक्षैः सकाश्मर्यैः[12] खदिरैर्वेणुभिश्चिताः ।[13]
तोयश्चास्वल्पकं यस्यां पतङ्गैरलिभिर्युताः ॥ ९ ॥
मयूरैस्तित्तिरैर्गृध्रैः सारसै[14]र्या समाकुला ।
आग्नेयी सा क्षितिः प्रोक्ता कठिना तत्र या[15] शिला ॥ १० ॥
तृणतोयविहीना या ग्रीष्मे स[16]मृगतृष्णिका ।
ऊषरा यत्र दृश्यन्ते शृगाला[17] बहवस्तथा ॥ ११ ॥
विभीतकार्कसंकीर्णा कर्करा[18] त्वहिसंवृता ।
पीलुश्लेश्मातकाकीर्णा वायवी सा प्रकीर्तिता ॥ १२ ॥
तद्भूमिसम्भवा वर्ज्या शिला यत्नेन देशिकैः ।
व्रीहिक्षेत्रं स्थितं यस्यां दक्षिणे सुमनोहरम् ॥ १३ ॥
क्षीरिणः फलिनो वृक्षाः सपुष्पा[19]यत्र पश्चिमे ।
जलाशयं सनलिनं यस्यामुत्तरतः स्थितम् ॥ १४ ॥

[6] सुरे—C.; शङ्कर श्वशुरे F. [7] त्रिकूटे मन्दरे चव निषधे नीलपर्वते—B,D, (additional line) F. [8] दशैते सुशिला ग्राह्याः पुण्येष्वन्येष्वपि द्विजाः—B. [क] श्रीकूटे —A,B,C,D [9] किस्कन्धे—C. [10] सम्भपवते—A,B. [11] सम्पन्नान्येष्वपि—B. [12] ब्रह्मब्रह्मस्वकास्वर्यैः—C. [13] —श्वेताः—C. [14] सरलैर्या—C. [15] यत्र सा—B. [16] सा—C. [17] मृणाला—B. [18] सार्कवा—A. [19] सपत्रा—B,C.

माहेन्द्री सा क्षितिः शस्ता शिला तत्रोद्भवा च या।
जलाशयैः पद्मषण्डैर्मण्डिता या समन्ततः ॥ १५ ॥
कीर्णा पुष्पवनैर्या च वारुणी सा क्षितिः शुभा।
तत्रोद्गता शिला या च[20] सा शस्ता सुरसत्तम[21] ॥ १६ ॥
आग्नेयी गुर्जराद्येषु वायवी मरुषु स्मृता।
माहेन्द्री मध्यदेशेषु[22] अनूपेषु च वारुणी ॥ १७ ॥
क्षाराम्लसेविता[23] या च नदीतीरसमुद्भवा।
पुरमध्ये[24] स्थिता या च तथा पितृवने स्थिता ॥ १८ ॥
चतुष्पथे स्थिता या च मृच्छिला पङ्किला[25] च या।
उपरे[26] च तथा मध्ये वाल्मीके[27] चापि[28] या स्थिता ॥ १९ ॥
सूर्यरश्मिप्रतप्ता या या च दग्धा वनाग्निना[29]।
अन्यकल्पो[30]पयुक्ता या चान्यदेवार्थं[31] निर्मिता ॥ २० ॥
क्रव्यादाद्यैरुपहता वर्ज्या यत्नेन वै शिला।
विवर्णा च कुवर्णा च रूक्षवर्णा च वर्जिता ॥ २१ ॥[32]
सभाचत्वरसंस्था च ह्यत्यन्तोपहता शिला।
येन केनचिदानीता वर्जनीया तथा शिला ॥ २२ ॥
पुण्यसिन्धूद्भवा ग्राह्या पुण्यतीर्थोद्भवा च या।
नदीपर्वतसंलग्ना वृक्षच्छायासमावृता[33] ॥ २३ ॥
निमग्ना भूतले या[34] वा संस्पृष्टा[35] सूर्यरश्मिभिः।
अन्तर्जलोषिता[(a)] नद्यामेकवर्णा मनोरमा[36] ॥ २४ ॥
पाण्डुरा चारुणा पीता कृष्णा शस्ता तु वर्णिनाम्।
न यदा लभ्यते[37] सम्यग्[38] वर्णिनां वर्णतः शिला ॥ २५ ॥

[20] तु—B,C. [21] सुरसत्तमः—B,C. [22] मध्यदेशे तु—B,C. [23] क्षीराम्बु—B ; क्षाराम्बु—C. [24] पूर्वमध्ये—B. [25] म्लेच्छालाक्षणैः—B ; मृच्छिलापङ्कने—C,D. [26] उरसे—A ; उषार—B,C. [27] मल्मीके—A. [28] यापि—C. [29] दवाग्निना—B,C,D. [30] अन्यकर्मो—A. [31] अन्यदेवासु—A. [32] These two lines are omitted in A, C and D. [33] मनावृता—B,C. [34] वा—B,C. [35] या स्पृष्टा—B,C. [(a)]मलाश्रिता—B,C. [36] मनोहरा—B,C. [37] नयते—B,C. [38] सम्यत्—A.

वर्णाद्या[39]पादनं तत्र जुहुयात् सिंहविद्यया ।
कृते वर्णस्य जनने[40] तस्य वर्णस्य सा शुभा ॥ २६ ॥
श्रेष्ठवर्णा सुवर्णा च रेखा[41] सर्वस्य शस्यते ।
अपरस्य तु वर्णस्य श्रेष्ठा सा[42] न प्रशस्यते ॥ २७ ॥
वर्णिनामिह सर्वेषां कृष्णरेखा प्रशस्यते ।
शिलानामिह सर्वासां शुक्लरेखा प्रशस्यते ॥ २८ ॥
रेखाणामपि सर्वासां व्यत्यासे[43] होममाचरेत्
पातालनरसिंहेन सहस्रं देशिकोत्तमः[44] ॥ २९ ॥
तर्पिते मन्त्रराजे तु ततः सा शुभदा नृणाम् ।
विपरीते तु विमले विम्बके[45] हीरके तथा ॥ ३० ॥
इममेव विधिं कुर्यादन्यस्मिन्नपि गर्हिते ।
युवा[46] मध्या भवेद् ग्राह्या बाला वृद्धा च गर्हिता ॥ ३१ ॥
सुगन्धा निबिडा स्निग्धा तथा गम्भीरनिस्वना ।
शीतला या[47] च तेजाढ्या युवेति[48] प्रोच्यते शिला ॥ ३२ ॥
तद्रूपा प्रोच्यते मध्या[49] किन्तु सा कठिना भवेत् ।
अतिमृद्वी भवेद् बाला वृद्धातिकठिना मता ॥ ३३ ॥
टङ्काघातसहा[50] बाला वृद्धा लोकक्षयी स्मृता[51] ।
स्त्रीपुंनपुंसकं चैव लक्षणेनैव लक्षयेत् ॥ ३४ ॥
उत्पाट्यमाने दृश्यन्ते तिन्दुकालातवज् ज्वलन् ।
स्फुलिङ्गाः श्रूयते नादः कांस्यघन्टानिनादवत् ॥ ३५ ॥
मूले मध्ये तथाग्रे च पुंलिङ्गेति च सा स्मृता
तदेव लक्षणं यत्र मन्दमन्दं[52] प्रतीयते ॥ ३६ ॥
स्त्रीलिङ्गेति मता सा च भिन्नकांस्यध्वनिस्तु या ।
नपुंसकेति सा ज्ञेया न यत्रैतद्द्वयं भवेत् ॥ ३७ ॥

[39] वर्णाद्यो—B,C. [40] कृष्णवर्णाविज्वलने—B. [41] रेखां—B. [42] श्रेष्ठसा—A,D. [43] वेदादि—B,C. [44] देशिकोत्तम—A. [45] विन्धके—B,C., विन्द्रके D. [46] युरा—B,C. [47] शीलया—B. [48] स्वरेति—B,C. [49] मध्यमा क्षात्राकीर्णा—C. [50] सहा omitted in B,C., [51] लोकक्षयङ्करी —B,C. ; लोकक्षयंकरी —D. [52] मन्दं मन्दं—A,C.

पुंलिङ्गैः प्रतिमा कार्या स्त्रीलिङ्गैः पादपीठिका[53]।
पिण्डिकार्थं तु[54] सा ग्राह्या दृष्टा या षण्डलक्षणा[55] ॥ ३८ ॥
लिङ्गानां तु विपर्यासे पूर्वोक्तं होममाचरेत्।
छेदने भेदने वाथ शिलागर्भं समीक्ष्यते[56] ॥ ३९ ॥
दृश्यन्ते मण्डला यस्यां सगर्भां तां[57] विनिर्दिशेत्।
मण्डूको मण्डले तु स्याल्लोहिते नात्र संशयः ॥ ४० ॥
हरिद्राभे[58] भवेद् गोधा कृष्णसर्पस्तथासिते।
निस्त्रिंश[59]सदृशे तोयं गृहगोधा तु कर्कशे ॥ ४१ ॥
आखुः पिङ्गलवर्णो स्यादरुणे शरटस्तथा।
पिङ्गवर्णे[60] तु पाषाणः पद्माभे सिकता भवेत् ॥ ४२ ॥
वृश्चिकः स्याद् विचित्रे तु पीते नीले पतङ्गकः।
पारावताभे खद्योतः[क] मण्डले तु विनिर्दिशेत् ॥ ४३ ॥
अकल्पना तु मण्डूके दौर्भाग्यं गोधया भवेत्।
सर्पे[61] विषेण मरणमनावृष्टिस्तथा जले ॥ ४४ ॥
धनहानिस्तु गोधाया[62] माखूनामिष्टजो भवेत्।
अल्पायुषस्तु शरटे पाषाणैर्विद्युता वधः ॥ ४५ ॥
वालुकायामनावृष्टिः कलहो वृश्चिके भवेत्।
राष्ट्रोच्छित्तिस्तु शलभे खद्योते[63] गोत्रसंक्षयः ॥ ४६ ॥
...　...　...　...　...
तस्मात् परीक्ष्य यत्नेन शिलां[64] गृह्णीत देशिकः ॥ ४७ ॥
सगर्भया तु शिलया रूपकं क्रियते यदि।
तद्देशे म्रियते राजा यजमानोऽथ देशिकः ॥ ४८ ॥

[53] पिठका—B. [54] पिण्डिकार्थं तु—B.C. [55] दृष्टा या पशुलक्षणा—A,D; F. तृष्णाया पशुलक्षणा—B; तृष्णा या पुंलक्षणा C; . पशुलक्षणा—Varendra ed. [56] समीक्ष्येत—A. [57] सगर्भेतां—B.C. [58] हरिद्राभा—A. [59] निःत्रिंश—A.B. [60] पिङ्गल—C. [क] खद्योतम्—D. [61] सर्प—B. [62] धनहानिरोधिया भवेत्—C. [63] खद्योतो—C. [64] शिला—C.

शिलायामपि वृक्षेषु यत्नाद् गर्भं समीक्षयेत्[65]।
सौभाग्यदा शैलजा स्यात्[66] स्वर्णजा[ख] पुष्टिदा भवेत् ॥ ४९ ॥
सुखप्रदा[67] स्यान्मणिजा राजती कीर्तिदा भवेत्।
ताम्रजा धनदा प्रोक्ता श्रीप्रदा वृक्षजा[68] मता ॥ ५० ॥
कौसुमा सुखदा प्रोक्ता गन्धजा[69] भोगदा[70] मता
प्रत्यग्रस्थापिता वापि[71] मृन्मयी सर्वसिद्धिदा[72] ॥ ५१ ।
वृक्षादीनां तु भेदेन कामभेदेन वा नृणाम्।
भिद्यते बहुधा धीरै[73]र्ज्ञात्वा[74] कार्या तु देशिकैः[75] ॥ ५२ ॥

॥ १५ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे पञ्चदशः शिलालक्षणपटलः । १५ ॥

## षोडशः पटलः

श्रीभगवान् उवाच—

सुवारे सुतिथौ योगे स्वर्क्षे सुकरणान्विते[1]।
अपूर्यमाणपक्षे तु सुग्रहे चोत्तरायणे ॥ १ ॥
यजमानानुकूले तु प्रतिमार्थं व्रजेद् गुरुः।
श्वेतवस्त्रपरिधानः श्वेतचन्दनचर्चितः ॥ २ ॥
श्वेतपुष्पकृतापीडः शिल्पिभिः सहितो गुरुः।
निपुणैः शिल्पिभिः सार्धं सहायैर्बलवत्तरैः ॥ ३ ॥
नृसिंहं पूज्य विज्ञाप्य पूज्य टङ्कादिकं ततः।
ध्यात्वा[2] हरिं हविः प्राश्य मन्त्राङ्गन्यस्तविग्रहः ॥ ४ ॥

[65] समीक्षते—C. [66] भाग्यदा शैलजा स्याच्च—A,B. [ख] स्वर्णभा—D. [67] सुखप्रजा—C. [68] ब्रह्मजा—B,C. [69] ब्रह्मजा—B,C. [70] भोगजा—B,C. [71] चापि—C. [72] सर्वकामदा—C. [73] वीरैः—C. [74] कृत्वा—B. [75] तद्विदैः—A,B,D,F. [1] नक्षत्रे करणान्विते—A. [2] ध्यायन्—B,C.

ब्राह्मणान् वाचयित्वा तु भक्त्या[3] मङ्गलदर्शनम् ।
दधि दूर्वां रोचनां वा आदर्शं कुसुमं सितम् ॥ ५ ॥
फलं च[4] पूर्णकुम्भं च वन्दयित्वा[5] वनं व्रजेत् ।
दिव्यान्तरिक्षभौमानि निमित्तान्युपलक्षयन् ॥ ६ ॥
यायाच्छुभ[6]-निमित्तेषु विपरीते निवर्तयेत्[7] ।
त्रिरायम्य[8] ततः प्राणान् ध्यायेत् सिंहतनुं हरिम् ॥ ७ ॥
पुनश्चाष्टोत्तरं जप्त्वा पातालमुषलं जपेत्[9] ।
गीतवाद्यवरौ दृष्ट्वा[10] यात्रा स्यात् सिद्धिदा नृणाम् ॥ ८ ॥
लक्ष्मीं ध्यायन् वनं यायात् सहायैः शिल्पिभिः सह ।
शङ्खकाहलशब्दैश्च पुण्याहजयमिश्रितैः ॥ ९ ॥
ऋग्यजुःसामसंघैश्च[11] ध्यायन् सिंहं वनं व्रजेत् ।
प्राचीं दिशमथोदीचीमैशानीं वा व्रजेद् गुरुः ॥ १० ॥
भूधराद्यास्तु ये पूर्वं सस्थानाः[12] कथिता मया ।
तत्र गत्वा समीपे तु कृतरक्षो वनं विशेत् ॥ ११ ॥
प्रविश्य तत्र यत्नेन शिल्पिभिः सहितो गुरुः ।
निरूपयेत् समन्तात् तु वृक्षं वाप्यथवा शिलाम् ॥ १२ ॥
लक्षणेन तु[13] मन्त्रज्ञो यत् पूर्वं कथितं मया ।
एकवर्णां शिलां दृष्ट्वा बाह्यदोषविवर्जिताम् ॥ १३ ॥
चतुर्दिक्षु समं कृत्वा भूमिभागं विशोधयेत् ।
प्लाव्य तोयेन पूतेन[14] गोमयेन विलेपयेत् ॥ १४ ॥
तत्रैव मण्डपं कृत्वा वासुदेवं ततो जपेत् ।
पताकैस्तोरणैश्चित्रैर्मण्डपं तं[15] विभूषयेत् ॥ १५ ॥

[3] कुर्यात् -B,C. [4] तु -A,D. [5] बन्धयित्वा—B. [6] मया शुभ—B. [7] विपरीतेन वर्तयेत्—B. [8] त्रिधायम्य—C. [9] यजेत्—B,C. [10] वरोत्कृष्णा -B.C. [11] शब्दैश्च—B,C. [12] संस्थिताः—B,C.; संस्थानाः—D. [13] तु omitted in C. [14] पूतेन तोयेन—B,C. [15] मण्डपान्तं—B.D.

पूजयेदथ दिग्देवान्[16] भूतक्रूरबलिं हरेत् ।
मांसं हरिद्राचूर्णं च दधिशक्तु[17]समन्वितम् ॥ १६ ॥
अत्र ये वा स्थिराः सर्वा (?) यातुधानाश्च गुह्यकाः ।
सिद्धादयो वा ये चान्ये तान् संपूज्य क्षमापयेत्[18] ॥ १७ ॥
सलाजं माषभक्तं च दद्यात् क्रूरबलिं बुधः ।
विष्णुं पूज्य विधानेन क्रमशस्तान् प्रपूजयेत् । १८ ॥
वायव्यामस्त्रमन्त्रेण गन्धपुष्पैः प्रपूजयेत् ।
वह्निं प्रज्वाल्य विधिना मन्त्रान् सन्तर्पयेत् ततः[19] ॥ १९ ॥
हुत्वा यथोक्तविधिना शान्तितोयं[20] समारभेत् ।
शान्तितोयं ततो गृह्य मन्त्रेण[21] प्रोक्षयेच्छिलां ॥ २० ॥
दर्भैरुल्लेखयेत् पश्चादस्त्र[22]-मन्त्रेण तां शिलाम् ।
मन्त्रैरालभ्य तां यत्नाच्छुक्लवस्त्रेण वेष्टयेत् ॥ २१ ॥
रक्षां कृत्वा नृसिंहेन दर्भैराच्छाद्य पूजयेत् ।
गन्धैः पुष्पैश्च नैवेद्यैर्धूपैश्च[23] पूज्य तां शिलाम् ॥ २२ ॥
ततस्तु मूलमन्त्रेण आज्यमष्टशतं हुनेत् (?) ।
ततः पूर्णाहुतिं दद्यान्मन्त्रराजेन[24] वै गुरुः ॥ २३ ॥
एवं समर्प्य[25] संपूज्य विज्ञाप्य च बलिं हरेत् ।
गन्धैः पुष्पैस्तथा धूपैर्दद्याद् भूतबलिं बुधः ॥ २४ ॥
अत्र येऽवस्थिताः सत्त्वा[26] यातुधानाश्च गुह्यकाः ।
सिद्धादयो वा ये चान्ये तान् संपूज्य क्षमापयेत् ॥ २५ ॥
"विष्णुबिम्बार्थमस्माकं[27] यत्नैषा केशवाज्ञया[28] ।
विघ्नावर्थं यद् भवेत्[29] कार्यमस्माक[30]मपि तद् भवेत् ॥ २६ ॥

[16] दिग्द्वारान्—B,C. [17] हरिद्राचूर्णं तु दधिगन्ध—B,C. [18] This verse is omitted in A,C and D,F. [19] सन्तर्प्य पूजयेत्—A,D. [20] होमं—B,C. [21] मन्त्रैः—A. [22] गन्धमन्त्रेण—B,C ; अस्त्रमन्त्रेण—A. [23] गन्धपुष्पैश्च नैवेद्यैः—B,C. [24] मूलमन्त्रेण—B,C. [25] सन्तर्प्य—B,C. [26] सर्वा—B,C. [27] ... विम्बाद्यमस्कारं—B,C. [28] केशवादयः—B. [29] अभवत्—B,C. [30] युष्माकमपि—A,B.

अनेन बलिदानेन प्रीता भवथ[31] सर्वदा ।
क्षेमेण गच्छतान्यत्र मुक्त्वा स्थानमिदं भव"[32] ॥ २७ ॥
एवं प्रबोधिताः सत्त्वाः परितुष्टा यथासुखम्[33] ।
आचम्य संविश्य ततः ( ? ) कृतरक्षापुरःसरः ॥ २८ ॥
चरुं प्राश्य निराहारः शिल्पिभिः सह देशिकः ।
हरिं विज्ञाप्य विधिवद् देवीं च कमलोद्भवाम् ॥ २९ ॥
पश्चिमे दर्भशय्यायां वसेत् तां रजनीं गुरुः ।
निराहारः स्थितो भूत्वा प्रामाणारम्भकं जपन् ॥ ३० ॥
"ॐ नमः[34] सर्वलोकपित्रे विष्णवे प्रभविष्णवे ।
विश्वाय विश्वरूपाय स्वर्गा[35]धिपतये नमः ॥ ३१ ॥
आगच्छ देवदेवेश प्रपन्नोऽस्मि तवान्तिकम् ।
स्वप्ने सर्वाणि कार्याणि हृदिस्थानानि यानि मे ॥ ३२ ॥
ॐ हूँ फट् विष्णवे स्वाहा ॥"
यदा संपश्यति[36] वृक्षं ज्वलन्तं धूम[37]-वर्जितम् ।
फलितं पुष्पितं चैव तदा सिद्धिर्न[38] दूरतः ॥ ३३ ॥
प्रज्वलन्तीं शिलां पश्येत् श्रिया वाधिष्ठितां शुभाम्[39] ।
ब्रह्मणा[क] धिष्ठितां वापि सा तदा सर्वकामदा ॥ ३४ ॥
श्रिया जुष्टं प्रज्वलन्तमथ पश्यति पर्वतम् ।
ततः प्रवृद्धशिखरं काञ्चनद्रुममण्डितम्[40] ॥ ३५ ॥
युतं शैलोद्भवैर्वृक्षैः फलपुष्पसमन्वितैः ।
एवंभूते तु संदृष्टे[41] स्वप्ने अर्चा[42] सुशोभना[43] ॥ ३६ ॥
अपरेऽहनि संप्राप्ते कृतरक्षः कृताह्निकः ।
शस्त्राणि विधिवत् पूज्य शिलां पूज्य[44] विधानतः ॥ ३७ ॥

[31] भवति -B,C [32] हर—A ; हरम् —B,C. [33] यथा सुखम् -B,C. [34] नमः omitted in B,C. [35] स्वप्नाधिपतये—B,C. [36] सदा स पश्यते —A,D यदा संपश्यते—B. [37] भूमि-वर्जितम B [38] द्धि is omitted in B. [39] ...पश्य प्रज्वलन्ती शिला पश्येस्य—B ; श्रियां वाधिष्ठितां शिलाम्—A. [क] ब्राह्मणा -D [40] काञ्चनद्रुमपर्वमण्डितम् -B. [41] सं omitted in B,C. [42] चर्चा—B. [43] सुशोभनाः A ; सुशोभन —B. [44] शिलां पूज्य—omitted in B.

अर्घ्यं दत्त्वा शिलायां तु शस्त्रं[ख] मन्त्रेण पूजयेत् ।
मन्त्रयित्वा स्वमन्त्रेण प्रज्वलन्तं विभावयेत् ।। ३८ ।
मध्वाद्याक्तमुखं कृत्वा[45] आत्मानं चिन्तयेद्धरिम् ।
शिल्पिनं विश्वकर्माणं ध्यात्वोदक्[46]-प्राङ्मुखोऽपि वा ।। ३९ ।।
शस्त्रं विश्वात्मकं[ग] ध्यात्वा प्रदद्याच्छिल्पिने गुरुः ।
मुखं पृष्ठं शिरोमूलं[47] शिल्पिने दर्शयेद् गुरुः ।। ४० ।।
शुक्लगन्धानुलिप्ताङ्गः स्नातः पुष्पाद्यलंकृतः ।
उदङ्मुखः प्राङ्मुखो वा स्थपतिः संयतः शुचिः ।। ४१ ।।
ध्यात्वा[48] स्वदेवतां[49] शिल्पी टङ्कहस्तो[50] जितेन्द्रियः ।
यथेष्टं शातयेत्[51] पश्चाद् यच्छिरां[घ] तच्छृणुष्व मे । ४२ ।।
उदक्शिरां प्राक्शिरां वा तथैवेशानदिग्गताम् ।
ऊर्ध्वभागं भवेत् पृष्ठमधोभागं भवेन्मुखम् ।। ४३ ।।
किञ्चिन्मानाधिकं कृत्वा कल्पयेत् प्रतिमाशिलाम्[52] ।
किञ्चिन्मानाधिका ग्राह्या[53] विविधाकारपिण्डिका ।। ४४ ।।
छेदयित्वा समुद्धृत्य चतुरस्रं तु[54] कारयेत् ।
अनेनैव विधानेन परीक्ष्य गुणदोषतः[55] ।। ४५ ।।
वृक्षं यत्नेन गृह्णीयाद् विधिज्ञो देशिकोत्तमः ।
समानीय रथं[56] श्रेष्ठं सुशीलैर्वृषभैर्[57] युतम् ।। ४६ ।।
रथे स्थाप्य शिलां यत्नाच्छादयित्वा तु वाससा ।
हरिं ध्यात्वा स्मरन् मन्त्रमर्घ्यं दद्यात्ततो गुरुः ।। ४७ ।।
आनीयमाने तु रथे रथाङ्गपरिवारके[58] ।
वृषभे वा समुत्पन्नेऽनिमित्तेन [ तु ? ] साधकः[59] ।। ४८ ।।

[ख] शस्त्र -D. [45] मध्वाद्यायुक्तं मखं त्वाम् -B,C. यत्प्रीत्या सुखं कृत्वा स्वात्मानं चिन्तयेद्धरिं —E. [46] ध्यात्वादङ्क —B,C. [ग] विष्ण्वात्मकं —D. [47] शिरोऽङ्गुलं –A,F. [48] ध्यात्वा च वासुदेवं तां -B. [49] स्वदेवता—A. [50] टङ्कसुतहस्तः -B. [51] छादयेत् -B. [घ] यच्छिरन्ते—E, स्वच्छिन्नां others. [52] ...शिवाम् —B. [53] त्याज्या -A. [54] तु omitted in B,C. [55] ...कः—B. [56] रथे A,D,E. [57] शुक्लैः -B. [58] रथाङ्गोपरिचारके —A,D. [59] साधवः—A.

वैष्णवाग्नौ नृसिंहेन[60] तिलैर्घृत[61]विमिश्रितैः ।
हुत्वा चाष्टशतं सम्यक् तद्दोषेण विमुच्यते ॥ ४९ ॥
आनीय शङ्खनिर्घोषैर्गीतमङ्गलनिःस्वनैः[62] ।
प्रासादस्योपरिभागे कृत्वा कर्मकुटीं गुरुः ॥ ५० ॥
शिलां तां स्थाप्य तस्मिंस्तु अर्चयित्वा बलिं हरेत् ।
ततः प्रवर्तयेत् कर्म विद्वान्[63] विज्ञैस्तु शिल्पिभिः ॥ ५१ ॥
॥ १६ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे षोडशो वनयागपटलः ॥ १६ ॥

## सप्तदशः पटलः

श्रीभगवान् उवाच—

यथोक्तायां दिशायां तु न यदा लभ्यते शिला ।
तदा विदिक्स्थिता ग्राह्या विधिना येन तच्छृणु ॥ १ ॥
समानीय शिलां सम्यक् पूर्वोक्तै[1]र्लक्षणैर्युताम् ।
प्रासादस्योत्तरे भागे खात्वा भूमिं विधानवित् ॥ २ ॥
शिलां संस्थाप्य तत्खाते मृदा संपूरयेद् गुरुः ।
समीकृत्य[2] तु तां भूमिं मण्डपं तत्र कारयेत् ॥ ३ ॥
पताकाध्वजपत्राद्यैर्भूषयीत समन्ततः ।
तोरणैः कदलीस्तम्भैर्वितानेन[3] तु भूषयेत् ॥ ४ ॥
प्राच्यां तु भद्रकं[4] लिख्य तत्र विष्णुं यजेद् गुरुः ।
प्रबालमुक्ताफलकै[5]र्हैमपुष्पैः समुज्ज्वलैः ॥ ५ ॥

[60] तु सिंहेन—B. [61] घृतं वर्घृतैः –B,C. [62] निःस्वर्णैः—B. [63] विद्वान् omitted in B. [1] पूर्वोक्तलक्षणैः –B. [2] समाहृत्य—B,C. [3] चितानमनु—B. [4] तन्त्रकं—B. [5] वर्णकैः—B,C.

पूर्वोक्तं सकलं वापि[6] विधानं समुपाचरेत् ।
भूतक्रूरबलिं दद्यात् पूर्वोक्तविधिनैव तु ॥ ६ ॥
प्रतीच्यां पूर्वविधिना होमं कुर्याद् यथोदितम्[क] ।
दिग्दोषपरिशुद्ध्यर्थं विशेषाद्धोममाचरेत् ॥ ७ ॥
पातालनरसिंहेन सहस्रं वैष्णवानले ।
दिग्देवानामथाङ्गानां[8] हुत्वा पूजां[9] ददेद् गुरुः ॥ ८ ॥
तर्पिते मन्त्रराजे तु दिग्दोषैर्मुच्यते शिला ।
ततः पूर्वोक्तविधिना कृत्वा पूजादिकं[10] गुरुः ॥ ९ ॥
पूर्वोक्तेन विधानेन शिरः[ख] पृष्ठादि कल्पयेत् ।
मन्त्रोदकेन संप्रोक्ष्य शिलां ताम्[11] उद्धरेद्[ग] गुरुः ॥ १० ॥
दिग्दोषप्रशमनार्थं गृष्टिं भव्यां[12] स्वलङ्कृताम् ।
सुवर्णशृङ्गसंयुक्तां कांस्यदोहां पयस्विनीम् ॥ ११ ॥
ताम्रपृष्ठां सोपवीतां दद्याद् रौप्यखुरां गुरोः ।
तोषयीत गुरुं यत्नाद् वस्त्रालङ्कारकादिभिः ॥ १२ ॥
शिल्पिनं तोषयेदेवं वस्त्रालङ्कारचन्दनैः[13] ।
आचार्ये तोषिते विष्णुस्तोषितः स्यान्न संशयः ॥ १३ ॥
शिल्पिनं तोषयेदेवं विश्वकर्मा सुपूजितः[14] ।
ततः कार्याणि कुर्वीत[15] सर्वकामप्रदा भवेत्[16] ॥ १४ ॥

॥ १७ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे सप्तदशः दिक्शान्तिपटलः ॥ १७ ॥

[6] चात्र—B,C. [7] क्रूरे—B,C. [क] यथोचितम्—F. [8] दिग्देवाय यथाङ्गानं—C ; ...यथाङ्गानं -B [9] पूर्णां—B,C,D,F. [10] पुष्प्यादिकं—B,F. [ख] शिलाः F. [11] शिलास्ताः—B. [ग] प्रोक्षयेद्—F. [12] ...प्रदर्शनार्थं च शुटिं भास्या स्वलभ्रत्ता—B. [13] This line is omitted in A ; ...बन्धनैः—B,C. [14] ...विश्वकर्मानुपूजितः B. [15] युञ्जीते—A ; कुर्वीते—B ; ...कर्माणि युञ्जीत—D. [16] कर्म प्रदापयेत्—B,C.

## अष्टादशः पटलः

श्रीभगवान् उवाच

अतःपरं प्रवक्ष्यामि प्रतिमालक्षणं परम् ।
यन्न कस्यचिदाख्यातं गुह्याद् गुह्यतरं परम् ॥ १ ॥
प्रासादस्योत्तरे भागे शिलां नीत्वा तु देशिकः ।
कृत्वा कर्मकुटीं रम्यां प्रतिमाकर्म कारयेत् ॥ २ ॥
चतुरस्रायतां[1] कृत्वा शिलां संस्थाप्य चार्चयेत् ।
शिरो मुखं च पृष्ठं च अङ्कयित्वा तु बुद्धिमान् ॥ ३ ॥
यजमानानुकूलेन गुरुः कर्म समारभेत् ।
शिलां पूर्वाननां कृत्वा अथवा चो[2]त्तराननाम् ॥ ४ ॥
तोयेन ब्रह्मघोषाद्यैः स्थाप्य पश्चाद् बलिं हरेत् ।
दधिदूर्वाक्षतैः पूजां नवारम्भे समाचरेत् ॥ ५ ॥
शुक्लैर्गन्धैश्च माल्यैश्च मन्त्रेणानेन देशिकः
तद् यथा—"ॐ तत् सत् नमः । योऽसौ[3] भगवान् सर्व-
जगत्प्रवीर [:] सङ्कर्षणो वासुदेवः प्रवरवराहतः[4] जय जय
सुप्रतिष्ठितः कीर्तिं प्रवर्धयस्व । ॐ ऊ[5] फट् फट्[6] नमः ॥"
स्वस्तिवाच्य द्विजान् पूज्य[क] गुरुं भक्त्या समर्चयेत् ।
वस्त्रपुष्पादिदानेन अशाठ्येन[7] तु पूजयेत् ॥ ६ ॥
मङ्गलैर्ब्रह्मघोषाद्यैः प्रतिमां संविभाजयेत् ।
मध्यसूत्रं[8] समास्फाल्य[9] तीक्ष्णशस्त्रेण चोत्किरेत् ॥ ७ ॥
अभिप्रेतप्रमाणं तु नवधा प्रविभाजयेत्[10] ।
नवमे[11] भास्करैर्भक्ते[12] भागं ( : ? ) स्वाङ्गुल[13]मुच्यते ॥ ८ ॥

[1] चतुरस्रायतं—A. [2] अथवा उत्तरा—A. [3] समावासौ—B,C. [4] ... तः—is missing in B,C. [5] ॐ ॐ ॐ—B, ओङ्कार—A. [6] फट् फट् फट् फट्—B [क] सम्यक्—D. [7] अशोच्येन—A. [8] ... सूत्रं—B,C. [9] समास्फोन्य B. [10] परिभाजयेत्—B,C. [11] नममे—A. [12] भास्करे भक्ते—B. [13] साङ्गल B,C.

द्व्यङ्गुलं गोलकं नाम्ना कलानेत्रं तदुच्यते ।[14]
भागमेकं त्रिधा भक्त्वा[ख] पार्ष्णिभागं प्रकल्पयेत् ॥ ९ ॥
भागमेकं तथा जानौ ग्रीवायां भागमेव च ।
मुकुटं तालमात्रं[ग] स्याद् तालमात्रं[घ] तथा मुखम् ॥ १० ॥
तालमात्रेण कण्ठं तु तालेन हृदयं तथा ।
नाभिमेढ्रान्तरं तालं द्वितालावूरुकौ तथा ॥ ११ ॥
तालद्वयेन जङ्घा तु सूत्राणि शृणु साम्प्रतम् ।
कार्यं सूत्रद्वयं पादे जङ्घामध्ये तथा परम् ॥ १२ ॥
जानौ सूत्रद्वयं कार्य*मूरुमध्ये तथापरम् ।
मेढ्रे तथापरं कार्यं कट्यां सूत्रं तथापरम्[15] ॥ १३ ॥
मेखलाबन्धसिद्ध्यर्थं नाभ्यां चैवापरं तथा ।
हृदये च तथा कार्यं कण्ठे सूत्रद्वयं तथा[16] ॥ १४ ॥
ललाटे चापरं कार्यं मस्तके च तथापरम् ।
मुकुटोपरि कर्तव्यं सूत्रमेकं विचक्षणैः ॥ १५ ॥
सूत्राण्यूर्ध्वं प्रदेयानि सप्तैव सुरसत्तम ।
कक्षा-त्रिकान्तरेणैव कण्ठ[ङ]सूत्राणि दापयेत् ॥ १६ ॥
मध्य[17]सूत्राणि संत्यज्य[18] सूत्राण्येवं निवेशयेत्[19] ।
ललाटे नासिकावक्त्रं कर्तव्यं चतुरङ्गुलम् ॥ १७ ॥
ग्रीवाकर्णं तु कर्तव्य[20]मायामाच् चतुरङ्गुलम् ।
द्व्यङ्गुले हनुके कार्ये विस्ताराच् चिबुकं तथा ॥ १८ ॥
अष्टाङ्गुलं ललाटं[च] तु विस्तारेण प्रकीर्तितम् ।
परेण द्व्यङ्गुलौ शङ्खौ कर्तव्यावलकान्वितौ ॥ १९ ॥

[14] This line is partly omitted in B,C. [ख] भक्ता—B,C. [ग] भालमात्रं—Var. ed. [घ] भालमात्रं—Var. ed. * जानौ सूत्रद्वये कार्ये—F. [15] सूत्रद्वयं तथा—B. [16] B omits this line here but places it just after verse II.; C follows B and reads again the same line here. [ङ]—पट A,B,C. [17] मध्ये—B. [18] संयोज्य—B,C. [19] निवेदयेत्—A. [20] ग्रीवाकर्णौ तु कर्तव्यौ—B,C. [च] ललाटे—A,B,C.

चतुरङ्गुलमाख्यातमन्तरं[21] कर्णनेत्रयोः।
द्व्यङ्गुलौ पृथुकौ कर्णौ कर्णार्धाङ्गं च पञ्चके ॥ २० ॥
भ्रुसमेन तु सूत्रेण कर्णश्रोत्रं[22] प्रकीर्तितम्।
विद्धं षडङ्गुलं कर्णं विद्धं[23] च चतुरङ्गुलम् ॥ २१ ॥
चिबुकेन समं विद्धमविद्धं वा षडङ्गुलम्।
खड्गपात्रं तथा वर्तिं शष्कुलीं कल्पयेत् तथा ॥ २२ ॥
अङ्गुलेनाधरः कार्यस्तस्या[24]र्धेनोत्तराधरम्।
अर्धाङ्गुलं तथा गोजी (?) वक्त्रं तु चतुरङ्गुलम् ॥ २३ ॥
आयामेन[25] तु वैपुण्यात् ( -पुल्यात् ? ) सार्धमङ्गुलमुच्यते।
अव्यात्तमेवं स्याद् वक्त्रं व्यात्तं द्व्यङ्गुलमुच्यते ॥ २४ ॥
नासावंशसमुच्छ्रायं मूले त्वेकाङ्गुलं मतम्।
उच्छ्रिताद्[26]द्व्यङ्गुलं चाग्रे करवीरोपमा[27] स्मृता ॥ २५ ॥
अन्तरं चक्षुषोः कार्यं चतुरङ्गुलमानतः।
द्व्यङ्गुलं चाक्षिकोषं च[28] द्व्यङ्गुलं चान्तरं तयोः[29] ॥ २६ ॥
तारानेत्रविभागेन दृक्तारा पञ्चमांशिका।
अङ्गुलं नेत्रविस्तारं द्रोणी चार्धाङ्गुला[30] मता ॥ २७ ॥
तत्प्रमाणा भ्रुवोर्लेखा भ्रुवौ नेत्रसमे मते।
भ्रूमध्यं द्व्यङ्गुलं कार्यं भ्रूदैर्घ्यं चतुरङ्गुलम् ॥ २८ ॥
षट्त्रिंशदङ्गुलायामं[31] मस्तकस्य तु वेष्टनम्।
मूर्तीनां केशवादीनां द्वात्रिंशद् वेष्टनं भवेत् ॥ २९ ॥
पञ्च नेत्रात् त्वधो ग्रीवाविस्ताराद् वेष्टनं पुनः[32]।
( द्विगुणं तु भवेदूर्ध्वं विस्तृताष्टाङ्गुलं पुनः। )[33]
ग्रीवात्रिगुण[34]मायामं ग्रीवावक्षोऽन्तरं भवेत् ॥ ३० ॥

[21] कर्तव्यं—B, [22] श्रोत्रः प्रकीर्तितः—A,D,F. [23] कर्णमविद्धं—C. [24] तयार्धं—C.
[25] अगमोमेन -B. [26] भद्रिका—B,C. [27] करवीकोपमा—B,C. [28] कोषं तं—B,C.
[29] चातुरन्तयोः—B,C, [30] च द्व्यङ्गुला -B. [31] षट् द्व्यङ्गुलकमायामं—B,C. [32] भवेत्—B,C. [33] This line is found in B,C,D,F. [34] ग्रीवाभिगुण—B.

स्कन्धावष्टाङ्गुलौ कार्यौ त्रिकलावंशकौ शुभौ।
सप्ततालौ[35] स्मृतौ बाहू प्रबाहू षोडशाङ्गुलौ॥ ३१॥
त्रिकलं विस्तृतौ बाहू प्रबाहू चापि तत्समौ[36]।
बाहुदण्डाधंतो[37] ज्ञेयः परिणाहः[38] कला नव॥ ३२॥
सप्तदशा[39]ङ्गुलौ मध्ये कूर्परोर्ध्वे[छ] च षोडश।
कूर्परस्य भवेन्नाहस्त्रिगुणः सुरसत्तम॥ ३३॥
नाह(ः)प्रवाहमध्ये तु षोडशाङ्गुलमुच्यते।
अग्रहस्ते[40] परीणाहो द्वादशाङ्गुलमुच्यते॥ ३४॥
विस्तारेण करतलं कीर्तितं तु षडङ्गुलम्।
दैर्घात् सप्ताङ्गुलं कार्या मध्यात् पञ्चाङ्गुलं[ज] मता॥ ३५॥
तर्जन्यनामिका चापि तस्मादर्धाङ्गुलं विना।
कनिष्ठाङ्गुष्ठकौ कार्यौ चतुरङ्गुलसम्मितौ[41]॥ ३६।
द्विपर्वाङ्गुष्ठकः कार्यः शेषाङ्गुल्यस्त्रिपर्विकाः।
सर्वासां पर्वणोर्ध्वेन[42] नखमानं विधीयते॥ ३७॥
वक्षसो यत् प्रमाणं च जठरं तत्प्रमाणतः[43]।
ततो नेत्रान्तरं कार्यं तालमात्रं प्रमाणतः।[44]
अङ्गुलैकं भवेन्नाभिर्वेधेन च प्रमाणतः॥ ३८॥
नाभिमध्ये परिणाहो द्विचत्वारिंशदङ्गुलैः।
अन्तरं स्तनयोः कार्यं तालमात्रं प्रमाणतः॥ ३९॥
चुचुकौ[झ] पर्वमानौ तु मण्डलं द्विपरं[45] भवेत्।
चतुःषष्ट्यङ्गुलं कार्यं वेष्टनं वक्षसः स्फुटम्॥ ४०॥
चतुर्मुखं तु तदधो वेष्टनं परिकीर्तितम्।
परिणाहस्तथा कट्यां चतुःपञ्चाशदङ्गुलैः॥ ४१॥

[35] गुप्तनेत्रौ—A,D. [36] च षडङ्गुलौ—B. [37] दण्डोर्धतो—B,C. [38] परिवर्णात्—B,C. [39] सप्तदण्डा A. [छ] कूर्परौ द्वौ—D. [40] अर्धहस्तो—B. [ज] पञ्चाङ्गुला—D. [41] समन्वितौ—B,C. [42] पवनोर्ध्वेन—A. [43] यत्प्रमाणकम्—A,D. [44] B,C. Add this line here. [झ] चिबुकौ—B,C. [45] द्विपर्वं—A

विस्तारश्चोरुमूले तु प्रोच्यते द्वादशाङ्गुलः ।
तस्मादभ्यधिकं मध्ये ततो निम्नतरं[46] क्रमात् ॥ ४२ ॥
विस्तृताष्टाङ्गुलं जानु त्रिगुणं[47] परिणाहतः ।
जङ्घामध्ये तु विस्तारः सप्ताङ्गुल उदाहृतः ॥ ४३ ॥
त्रिगुणा (?) परिधिश्चास्य जङ्घाग्रं पञ्च विस्तरात् ।
त्रिगुणां (?) परिधिश्चास्य पादौ तालप्रमाणकौ ॥ ४४ ॥
आयामादुच्छ्रितौ पादौ चतुरङ्गुलमेव च ।
गुल्फात् पूर्वं तु कर्तव्यं प्रमाणात् चतुरङ्गुलम् ॥ ४५ ॥
त्रिकलं विस्तृतौ पादौ द्व्यङ्गुलोऽ[48]ङ्गुष्ठकः स्मृतः ।
पञ्चाङ्गुलं तु नाहोऽस्य[49] दीर्घं चास्य[ज] प्रदेशिनी ॥ ४६ ॥
अष्टमांशोऽष्टमांशो न (शोनाः ?) शेषाङ्गुल्यः क्रमेण तु ।
सपादाङ्गुलमुत्सेध्यमङ्गुष्ठस्य[50] प्रकीर्तितम् ॥ ४७ ॥
[ पादोनमङ्गुलं कार्यमङ्गुष्ठस्य नखः सदा[51] ।
अर्धाङ्गुलं तथा नासाक्रमादूनं तु कारयेत् ॥ ४८ ॥
द्व्यङ्गुलौ[52] वृषणौ कार्यौ मेढ्रं तु चतुरङ्गुलम् ।
परिणाहेन कोषाग्रं कर्तव्यं चतुरङ्गुलम् ॥ ४९ ॥
षडङ्गुलपरिणाहौ वृषणौ परिकीर्तितौ । ]
वृषणालंकृता कार्या प्रसन्नवदनेक्षणा ॥ ५० ॥
प्रतिमा वासुदेवस्य मानेन सुरसत्तम ।
एतत् ते लक्षणं प्रोक्तमुद्देशेन मयानघ ॥ ५१ ॥
अनयैव दिशा कार्यं स्वयमभ्युह्य देशिकैः ।
लोकेषु लक्षणं दृष्ट्वा हसिताद्यं निरीक्षणम् ॥ ५२ ॥
तथातथैव कर्तव्यं सूरं (?) यत्नेन देशिकैः ।
वासुदेवं तु कुर्वीत चतुर्बाहुं सुरेश्वरम् ॥ ५३ ॥

[46] निम्नतरं -A,B. [47] त्रैगुणा —A ; त्रिगुणः —B,C. [48] व्यङ्गुलो —B,C. [49] चास्य —A ; तद्वत् B,C. [ज] दीर्घत्वं (?) –D. [50] ... मङ्गःस्य —B,C. [51] नखामदा —B,C. [52] अङ्गष्ठो —B,C. [ ] Portion within brackets is wanting in D.

दक्षिणोपरि चक्रं तु पद्मं चाधः प्रकल्पयेत्।
वामोपरि गदा कार्या शङ्खं चाधः सुशोभनम्। ५४ ॥
एतल्लक्षणसंयुक्ता प्रतिमा सन्निधा भवेत्।
श्रीपुष्टी[53] चापि कर्तव्ये पद्मवीणाकरान्विते ॥ ५५ ।
ऊरु[54]मात्रोच्छ्रितायामे किंचिदावर्जिते तथा ।
मालाविद्याधरौ[55] कार्यौ प्रभामण्डलसंस्थितौ ॥ ५६ ॥
प्रभां विभूषयेद् यत्नाद् गजव्यालादिभिर्बुधः।
पद्माभं पादपीठं तु तथा[d] शोभासमन्वितम् ॥ ५७ ॥

........................ ...............

देशा[56]दर्शानुरूपेण कर्तव्यं देशिकोत्तमैः ॥ ५८ ॥
॥ १८ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे अष्टादशः प्रतिमालक्षणपटलः ॥ १८ ॥

## ऊनविंशः पटलः

श्रीभगवान् उवाच—

अतःपरं प्रवक्ष्यामि पिण्डिकालक्षणं तव
उच्छ्रायं प्रतिमार्धं च[1] दैर्घ्येण प्रतिमासमा ॥ १ ॥
चतुःषष्टिपुटाम्[2] कृत्वा पिण्डिकां तत्र कल्पयेत्।
त्यक्त्वा पंक्तिद्वयं चाधस्तदूर्ध्वं यत्र कोष्ठकम् ॥ २ ॥
समं त[3]दुभयोः पार्श्वे अनन्तं परिमार्जयेत्।
ऊर्ध्वं पंक्तिद्वयं त्यक्त्वा अधस्ताद् वर्ण[4]-कोष्ठकम् ॥ ३ ।
अन्तस्थं मार्जयेद् यत्नात् पार्श्वयोरुभयोः समम्।
तयोर्मध्यगतौ तत्र चतुष्कौ मार्जयेत् ततः ॥ ४ ॥

[53] श्रीयुष्टा—B. [54] तरु—B.C. [55] वेद्याधरौ -B,C. [d] यथा—D. [56] दशादर्श -B,C. [1] तु—B,C. [2] पदान्—B,C. [3] समस्त -B,C. [4] अधस्तद् बहुकोष्ठकम् B,C.

चतुर्धा भाजयित्वा तु ऊर्ध्वं पंक्तिद्वयं बुधः ।
मेखला भागमात्रा[5] स्यात् खातं तस्यार्धमानतः[6] ॥ ५ ॥
भागं भागं[7] परित्यज्य पार्श्वयोरुभयोः समम्[8] ।
दत्त्वा चैकं पदं बाह्ये प्रमाणं कारयेद् बुधः ॥ ६ ॥
त्रिभागेन च भागः स्यादग्रे स्यात् तोयनिर्गमः ।
नानाप्रकारभेदेन भद्रेयं पिण्डिका शुभा ॥ ७ ॥
॥ १६ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे ऊनविंशः पिण्डिकालक्षणपटलः ॥ १६ ॥

## विंशः पटलः

श्रीभगवान् उवाच[1]—

अतःपरं प्रवक्ष्यामि लक्ष्मीलक्षणमुत्तमम् ।
अष्टताला तु कर्तव्या देवी लक्ष्मीः[2] सुरेश्वरी ॥ १ ॥
तत्कर्म सौर[3]काण्डे तु कथयिष्ये तवा[4]नघ ।
नवतालिकक्षेत्रं तु कथ्यमानामितः शृणु ॥ २ ॥
भ्रुवौ यवाधिके कार्ये यवहीना तु नासिका ।
गोलकेनाधिकं वक्त्रमूर्ध्वं तिर्यग्विवर्जितम् ॥ ३ ॥
आयते नयने कार्ये त्रिभागोनैर्यवै[5]स्त्रिभिः ।
तदर्धेन तु वै पुण्यं नेत्रयोः परिकल्पयेत् ॥ ४ ॥
कर्णपाशोऽधिकः कार्यः सृक्कण्या[क] समसूत्रितः ।
नम्रं कलाविहीनं तु कुर्याद्दंशद्वयं सदा ॥ ५ ॥
ग्रीवा सार्धकला कार्या तद्विस्तारोपशोभिता ।
नेत्रं विना तु विस्तार[6] ऊरू जानू[7] च पिण्डिका ॥ ६ ॥

[5] भागमात्रं—C. ; भोगमात्रा —F. [6] खण्डितस्यार्धमानतः—B. [7] चाग्रं—B,C. [8] रपि—B,C. [1] omitted in A. [2] लक्ष्मी -A,B,C. [3] गौर—A,C. [4] तदा —A. [5] यवै—A ; यव—D [क] सृक्किण्या -A,B,C. [6] विस्तारे—A. [7] ऊरु जानु—C.

अङ्घ्रिपृष्ठे स्फिचे कट्यां यथायोगं प्रकल्पयेत् ।
सप्तांशोनास्तथाङ्गुल्यः दैर्घ्यं विस्कम्भनाहत.[8] ॥ ७ ॥
नेत्रैकवर्जितायामा जङ्घोरू च तथा कटिः ।
मध्यं पार्श्वे च[9] तद् वृत्तं घनं पीनं कुचद्वयम् ॥ ८ ॥
तालमात्रौ स्तनौ कार्यौ कटिः सार्धकलाधिकः ।
शेषमन्यद् यथोद्दिष्टं लक्ष्मीचेयंम्न प्रकीर्तिता ॥ ९ ॥
सर्वाभरणसम्पन्ना मध्ये क्षामा स्तनोन्नता[10] ।
श्रोणितटसुविस्तीर्णा कार्या देवी सुरेश्वरी ॥ १० ॥
द्विभुजा कम्बुग्रीवा च विशालाक्षी सुलक्षणा ।
स्तनौ समुन्नतौ कार्यौ कञ्चुकेनावगुण्ठितौ ॥ ११ ॥
नागहस्तोपमौ[11] बाहू ऊरू रम्भासमौ शुभौ ।
नानारत्नोज्ज्वलं पट्टं देव्याः शिरसि दापयेत् ॥ १२ ॥
नानारत्नोज्ज्वला देव्या मेखला श्रोणिसंयुता[12] ।
युक्ता दिव्येन हारेण केयूरकटकोज्ज्वला ॥ १३ ॥
पद्मासना तु कर्तव्या पद्मश्रीफलपाणिका[13] ।
दक्षिणे पुण्डरीकं तु वामहस्ते तु श्रीफलम् ॥ १४ ॥
स्थिता वा त्रिबलिभङ्ग्द्योतिता[14] वा प्रशस्यते ।
स्त्रियौ पार्श्वद्वये कार्ये शुभे चामरहस्तिके[15] ॥ १५ ॥
भृङ्गारहस्तौ द्वौ नागौ स्नपयन्तौ[16] श्रियं स्थितौ[17] ।
श्रीरियं लक्षणोपेता स्थापिता सर्वकामदा[18] ॥ १६ ॥

. ... .. .. .... .. ... ..

सर्वासामेव देवीनामेतत् साधारणं स्मृतम् ॥ १७ ॥
॥ २० ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे विंशः श्री*लक्षणपटलः ॥ २० ॥

[8] दैर्घ्याद् विस्कम्भनाहः –A. दैर्घ्याद् विस्कम्भनाहत.—B,C. [9] पार्श्वं च –A,C,D,F. मध्यपार्श्वं च -B.; पार्ष्णि—var ed. म्न लक्ष्म्यचेयं – D. [10] तनोन्नता —B,C. [11] हस्तौ परौ—B,C. [12] संयुतम् -B,C. [13] पालिका A B. [14] त्रिबलीतस्थशोभिता—A,D [15] हस्तके—B,C. [16] स्नापयन्यौ –A. [17] श्रितौ –B,C. [18] कामदा सदा –B,C. * श्री omitted in F.

एकविंशः पटलः

श्रीभगवान उवाच—

खगेशस्य प्रवक्ष्यामि तव रूपं सुशोभनम्।
नरतुल्यं भवेद् गात्रं नासिका (कञ्चुकान्विता॥ १॥
पङ्कलोच्छ्रया सम्यक्) चञ्चुरूपेण कल्पिता
मस्तके कुटिलं[1] केशं नेत्रे चैवास्य वर्तुले॥ २॥
आयतौ द्विमुखौ चास्य पक्षौ कार्यौ सुशोभनौ।
स्कन्धप्रदेशसंलग्नौ ज्वलदग्निसमप्रभौ[2]॥ ३॥
पादयोर्नखराः कार्याः सर्पकुण्डलमण्डिताः।
नूपुरौ तस्य द्वौ नागौ[3] केयूरौ पद्मकस्वनौ[क]॥ ४॥
कटिदेशेऽस्य कुलिकः परिधानस्य वेष्टनम्।
वृश्चिकैः कर्णिका[4] कार्या गरुडस्य महात्मनः॥ ५॥
देवस्य पुरतः स्थाप्यो[5] यष्ट्यां वा मण्डले[6]ऽथवा।
प्रासादस्य प्रमाणेन कार्यो गरुडमण्डपः॥ ६॥
....   ....   ..   ....
यष्ट्याः समुच्छ्रयः कार्यः प्रासादायामतोऽर्धतः[7]॥ ७॥

॥ २१॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके आदिकाण्डे
[प्रतिष्ठापञ्चके प्रथमकाण्डे] एकविंशः वैनतेयलक्षणपटलः॥ २१॥

द्वाविंशः पटलः

श्रीभगवान् उवाच—

अत ऊर्ध्वं[1] प्रवक्ष्यामि प्रतिमालक्षणं पुनः।
मासाधिपानां संक्षेपात् तन्निबोध सुरोत्तम॥ १॥

(......) portion within the brackets is omitted in B, C. [1] मुकुरं—A.
[2] समन्वितौ—C. [3] कार्यौ—B, C. [क] स्वनौ—E, F. [4] कालिका—B. [5] स्थाप्या—B, C.
[6] मण्डपे तथा—B, C. [7] प्रसादस्यमतोद्धतः—B, C. [ ] This is found only in E, F.
[1] ऊर्ध्वं—omitted in B, C.

आदिमूर्तिर्वासुदेवः[2] सङ्कर्षणमथापि च[3] ।
सङ्कर्षणोऽथ प्रद्युम्नं सोऽनिरुद्धमथासृजत्* ॥ २ ॥
चतुर्मूर्तिः परं[4] प्रोक्तः[5] एकैको भिद्यते त्रिधा ।
केशवादिप्रभेदेन मूर्तिर्द्वादशकं स्मृतम् ॥ ३ ॥
पङ्कजं दक्षिणे दद्यात् पाञ्चजन्यं तथोपरि ।
वामोपरि गदा यस्य चक्रं चाधो व्यवस्थितम् ॥ ४ ॥
आदिमूर्तेस्तु भेदोऽयं केशवेति प्रकीर्त्यते[ख] ।
अधरोत्तरभागेन[6] कृतमेतत् तु यत्र वै ॥ ५ ॥
नारायणाख्या सा मूर्तिः स्थापिता भुक्तिमुक्तिदा ।
सव्याधः पङ्कजं यस्य पाञ्चजन्यं तथोपरि ॥ ६ ॥
दक्षिणोर्ध्वं गदा यस्य चक्रं चाधो व्यवस्थितम् ।
आदिमूर्तेस्तु भेदोऽयं माधवोऽयं प्रकीर्त्यते[7] ॥ ७ ॥
दक्षिणाधः स्थितं चक्रं गदा यस्योपरि स्थिता ।
वामोर्ध्व[8]संस्थितं पद्मं शङ्खं चाधो व्यवस्थितम् ॥ ८ ॥
सङ्कर्षणस्य भेदोऽयं गोविन्देति प्रकीर्त्यते[ग] ।
दक्षिणोपरि पद्मं तु गदा चाधो व्यवस्थिता ॥ ९ ॥
वामोर्ध्वं पाञ्चजन्यं च[9] चक्रं चाधो व्यवस्थितम् ।
सङ्कर्षणप्रभेदोऽयं[10] विष्णुरित्यभिधीयते[11] ॥ १० ॥
दक्षिणोपरि शङ्खं च[12] चक्रं चाधः प्रदृश्यते[घ] ।
वामोपरि तथा पद्मं गदा चाधः प्रदृश्यते[13] ॥ ११ ॥
मधुसूदननामायं भेदः सङ्कर्षणस्य तु ।
दक्षिणोर्ध्वं गदा यस्य पङ्कजं चाप्यधः स्थितम्[14] ॥ १२ ॥

[2] वसुदेव—C. [3] . सङ्कर्षणमथाश्रितः—E. * This line is omitted in A. . मथासृजत्—E F. [4] चतुर्मूर्तिपरं—A, F. [5] प्रोक्तं—B [ख] प्रकीर्तितः—E, F. [6] अथ चोत्तरभागेन —B, C. [7] माधवेति प्रकीर्तितः—B C. [8] वामोर्ध्वं —B. [ग] प्रकीर्तितः—E, F. [9] तु -B, C. [10] ...स्य भेदोऽयं —A. [11] शस्यते—C, E, F. [12] तु —C. [घ] विद्यते—F. भिद्यते —E. [13] प्रशस्यते —B, C. [14] स्थितः—B, C.

वामोर्ध्वे संस्थितं चक्रमधः शङ्ख[15] प्रदृश्यते।
ब्रह्माण्डग[16] वामपादं दक्षिणं शेषपृष्ठगम्॥ १३ ॥
बलिवञ्चनसंसक्तं[17] वामनं[18] चाप्यधः स्थितम्।
त्रिविक्रमेति सा मूर्तिः स्थापिता राज्यभोगदा॥ १४ ॥
वामोर्ध्वे[19] कौमुदी यस्य पुण्डरीकमधःस्थितम्।
दक्षिणोर्ध्वं सहस्रारं पाञ्चजन्यमधःस्थितम्॥ १५ ॥
सप्ततालप्रमाणं तु वामनं कारयेत् सदा
ऊर्ध्वं दक्षिणतश्चक्रमधः पद्मं व्यवस्थितम्॥ १६ ॥
वामोर्ध्वे कौमुदी यस्य पाञ्चजन्यमधःस्थितम्।
पद्मा पद्मकरा वामे पार्श्वे यस्य व्यवस्थिता॥ १७ ॥
स्थितो वाप्युपविष्टो वा सानुरागो विलासवान्।
प्रद्युम्नस्य हि भेदोऽयं[20] श्रीधरेति प्रकीर्त्यते॥ १८ ॥
दक्षिणोर्ध्वं महाचक्रं कौमुदी तदधःस्थिता।
वामोर्ध्वे नलिनं यस्य अधः शङ्खं विराजते॥ १९ ॥
हृषीकेशेति विज्ञेयः स्थापितः सर्वकामदः।
दक्षिणोर्ध्वे[21] पुण्डरीकं पाञ्चजन्यमधस्तथा[a]॥ २० ॥
वामोर्ध्वे संस्थितं चक्रं कौमुदी तदधःस्थिता।
पद्मनाभेति सा मूर्तिः स्थापिता मोक्षदायिनी॥ २१ ॥
दक्षिणोर्ध्वे[22] पाञ्चजन्यमधस्तात् तु कुशेशयम्।
सव्योर्ध्वं कौमुदी देवी हेतिराज[23]मधःस्थितम्॥ २२ ॥
अनिरुद्धस्य भेदोऽयं दामोदर इति स्मृतः।
एतेषां तु स्त्रियौ[24] कार्ये पद्मवीणाधरे शुभे॥ २३ ॥

[15] शङ्खः—B, C. [16] ब्रह्माशुगं—B, C ब्रह्माण्डे —A. [17] संयुक्त—A. [18] वरण —A. [19] वामोर्ध्वं—A. [20] प्रभेदोऽयं —C. [21] दक्षिणोर्ध्वं—C. [a] स्थिता—E, F. [22] दक्षिणार्धे —A. [23] हेतिराज omitted in C. [24] मूर्तिपे—B, C.

एतत् समासतः प्रोक्तं मूर्तीनां लक्षणं मया ।
मत्स्यादीनां प्रवक्ष्यामि विशेषेण तु लक्षणम् ।। २४ ।।

।। २२ ।। इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके आदिकाण्डे
द्वाविंशः केशवादिप्रतिमालक्षणपटलः ॥ २२ ।।

## त्रयोविंशः पटलः

श्रीभगवान् उवाच—

अतःपरं प्रवक्ष्यामि मत्स्यादीनां तु लक्षणम् ।
षट्त्रिंशदङ्गुलायामं तदर्धेन[1] तु विस्तृतम् ।। १ ।।
दैर्घ्याष्टमांशसंयुक्तं[2] पुच्छवक्त्रं तु कारयेत् ।
रोहितं[3]विवृतास्यं तु द्वादशाङ्गुलमानतः[4] ॥ २ ।।
कलैकं पृष्ठ[5]रोमं तु पुच्छोर्ध्वं क्रोडगं तथा ।
कृतस्यैवंविधस्येह रोहितस्य मुखोद्गतम्[6] ।। ३ ।।
नारायणं तु कुर्वीत आगुल्फं तन्मुखोद्गतम्[7] ।
एवं[8] तु मत्स्यमादाय[9] स्थापयेद् यस्तु मानवः ।। ४ ।।
सर्वज्ञत्वं भवेत्तस्य सर्वापन्मुक्तिरेव च ।
दैर्घ्यात् त्रितालसंयुक्तं[10] तदर्धं परिमण्डलम् ॥ ५ ।।
चतुश्चरणसुश्लिष्टं चतुरङ्गुलमात्रया ।
कपोल[11]द्वयमध्यात् तु गोविन्दं तु समुद्गतम् ।। ६ ।
कृत्वा वा[12] गुल्फपर्यन्तमुद्गच्छन्तं सुरोत्तम ।
भूकूर्मं[13] कारयित्वैवं[14] कूर्मं वा स्थापयीत यः ॥ ७ ।।

[1] अर्धेन तु सुविस्तृतम्—B, C. [2] संयुक्तां—B, C. [3] रोहिता—A. [4] ...नामत.—B. [5] प्रष्ठ—B, C. [6] मुखोदितं—B, मुखोदयं—C. [7] यथोद्गतम्—B, C.; this line is omitted in E, F. [8] एकं—B, C. [9] एव च—F; एवं स्त्रं मत्स्यमत्स्यम्वा—D, E. [10] द्वितालं—B, C. [11] कपाल—A, D, E, F. [12] वै—B, C. [13] भूकूर्म—B, C.; भूतकूर्मं—D, F.; भकूर्मं—E. [14] कारयेद् वैवं—C.

स्ववंशोद्धरणं तस्य जायते मुक्तिरेव च ।
चक्रं[15] कलाष्टकायामं प्रथिमा स्याद् द्विगलोकम् ॥ ८ ॥
हनू सप्ताङ्गुले चास्य सृक्कणी द्व्यङ्गुले मते ।
सप्ताङ्गुलं[16] मुखं प्रोक्तं वक्त्रौ सार्धकलौ[17] द्विजौ ॥ ९ ॥
नासारन्ध्रं भवेन्नेत्रं यवहीनेऽक्षिणी मते ।
किञ्चिद्वक्रे[18] स्मृते श्रोत्रे त्रिगोलक[19]-समायते ॥ १० ॥
चतुष्कलं कर्णमध्यं तदर्धेन तदुच्छ्रितम् ।
षडङ्गुला भवेद् ग्रीवा नेत्रैकं चोन्नता तु सा ॥ ११ ॥
शेषं नृसिंहवत् कार्यं वराहस्य तु[20] विग्रहम् ।
शेषाहिविधृतं पादं बाहुना धारयन् धराम् ॥ १२ ॥
शङ्खं वामे तथा लक्ष्मीं गदाचक्रे तु दक्षिणे ।
एवं नववराहं च[21] कृत्वा यः स्थापयेन्नरः ॥ १३ ॥
भवोदधिसमुत्तारं[22] राज्यं वा हतकण्टकम् ।
प्राप्नुयान्नात्र सन्देहो ह्यमुत्रेहैव[23] वा भुवि ॥ १४ ॥
तिर्यङ्नृसिंहदेवस्य तथा विपुलमाननम्[च] ।
वर्तुलेऽस्य तथा नेत्रे स्कन्धौ तालमितौ शुभौ ॥ १५ ॥
भ्रुवे व्याकुञ्चिते वक्त्रं विवृतं चोग्रदंष्ट्रकम् ।
लेलिहाना तथा जिह्वा समुद्धतसटं[छ] शिरः ॥ १६ ॥
दंष्ट्रे अङ्गुलनिर्यांते रक्ताग्रे च सिते तथा ।
त्रिकलाभ्यधिकं[24] वक्षः पञ्च नेत्राधिका कटिः ॥ १७ ॥
त्रिकलाभ्यधिकं[25] चोरू जानू चापि कलाधिके ।
जङ्घे सार्धकले मध्ये विस्तृतेऽग्रे[26] विभागतः ॥ १८ ॥

[15] चक्रं—A चक्रं—var. ed. [16] सप्ताङ्गुल—A. [17] तत् सार्धकलौ—B, C. [18] वक्रे—B, C. [19] द्विगोलक—B, C, E. F. [20] तु omitted in B, C. [21] देवं वराहं तु—B. C. [22] .. समायुक्तं—B, C. [23] अन्यत्रेहैव—B, C. [च] विश्वयमाननम् -E. F. [छ] समुद्गतसटं—E, F. [24] ...भ्यधिकं—B, C [25] ...भ्यधिका—A, अधिका—B, C. [26] विस्तृताग्रे—A, B,

ऊर्ध्वौ किञ्चित् स्मृतौ पादौ बाहुमूले कलाधिकौ।
किञ्चित् किञ्चित् तथा हीनौ पर्यन्ते चोपबाहुकौ ॥ १९ ॥
वपुरित्थं नृसिंहस्य कुर्याद् देशिकसत्तमः।
जानुदेशे च संस्थाप्य विदारित[27]महासुरम् ॥ २० ॥
भूषितं वैजयन्त्या तु मालया[28] श्रीसमन्वितम्।
खड्गचक्रधरं[29] देवं नृसिंहं कारयेद् बुधः ॥ २१ ॥
स्थापयेत् पापनाशाय जयाय नरकेशरीम् (?)[ज]।
भुजं[30] त्रिगोलकायामं वक्षो विस्तारशोभितम् ॥ २२ ॥
पाणिपादं तुरीयांशं प्रवृद्ध[31]-शिरसं तथा।
ऊर्वङ्घ्रि द्वितयायाम[32]-विहीनमध्ययुग्मकम्[झ] ॥ २३ ॥
कटिस्फिक्पार्श्वनाभीषु तदूर्ध्वं[33] वामनं बुधः।
कृत्वा संस्थापयेद् देवं[34] मोहनाशाय[35] सर्वथा ॥ २४ ॥
जामदग्न्यं तु कुर्वीत जटामुकुट[36]-मण्डितम्।
चतुर्बाहुं महाभागं सर्वक्षत्रान्तकं विभुम्[37] ॥ २५ ॥
दक्षिणे परशुं हस्ते वामे दद्यात् तथा धनुः।
खड्गं[38] दक्षिणहस्ते तु वामहस्ते तु खेटकम् ॥ २६ ॥
कुठारहस्तं द्विभुजं कुर्याद् वा रेणुकासुतम्[39]।
कृत्वैवं जामदग्न्यं तु स्थापयेद् यस्तु मानवः ॥ २७ ॥
स विष्णुं[40] प्राप्नुयाच्छीघ्रं कामांश्च मनसेप्सितान्।
कुर्याद् दाशरथिं रामं सप्ततालं[41] चतुर्भुजम् ॥ २८ ॥
शरकार्मुकहस्तं तु शङ्खचक्रधरं शुभम्।
दक्षिणोर्ध्वे भवेच्चक्रं वामोर्ध्वे शङ्खमेव च ॥ २९ ॥

[27] विभावित—B; बितारित—C. [28] लीलया—B [29] शङ्खचक्रधरं—C. [30] भूजं—B, C. [ज] नरकेशरी—D. [31] प्रवृद्धि—C. [32] यामं—B, C. [झ] मुखयुग्मकम्—All except E. [33] तदूर्द्धं—A. [34] दैवं—B, C. [35] मोहनार्थाय—A. [36] मकुट—C. [37] प्रभुम्—B, C. [38] शङ्खं—C. [39] रेणुक—B, C. [40] वित्तं—A. [41] दशतालं—B, C.

दक्षिणाधो भवेद् बाणो[42] वामाधो धनुरेव[43] च ।
द्विभुजं शरहस्तं वा रामं कुर्यात् सकार्मुकम् ॥ ३० ॥
कृत्वैवं राघवं रामं सर्वलक्षणसंयुतम् ।
क्रूर[अ]-शत्रुविनाशाय स्थापयेत् सर्वकामदम् ॥ ३१ ॥
तृतीयं च तथा[44] रामं चतुर्बाहुं शृणुष्व मे ।
वामोर्ध्वं लाङ्गलं[45] दद्यादधः शङ्खं[46] सुशोभनम् ॥ ३२ ॥
मुषलं दक्षिणोर्ध्वं तु चक्रं चाधः सुशोभनम् ।
गदां कृपाणं वा दद्यात् संस्थाने[47] शङ्ख[48]चक्रयोः ॥ ३३ ॥
कृत्वैवं बलदेवं तु यो नरः स्थापयेत् प्रभुम्[49] ।
पुत्रं ददाति तस्याथ विपक्षांश्च जयत्यसौ[50] ॥ ३४ ॥
दशतालं तथा बुद्धं[51] पद्मासनगतं हरिम् ।
प्रलम्ब[52]श्रवणं कुर्याच् चीवरा[53]लंकृतं तथा ॥ ३५ ॥
मलिनाभं समाधिस्थं पद्मास्यं पद्मलोचनम् ।
समाधिस्थोत्तानपाणिं योगदृष्टिसमन्वितम् ॥ ३६ ॥
स्थापयेत् रूपकामस्तु[54] पितेव जगतः स्थितम्[55] ।
कल्किनं तु चतुर्बाहुं बद्धतूणं[56] धनुर्धरम् ॥ ३७ ॥
शङ्खचक्रधरं कुर्यात् तथा खड्गधरं प्रभुम् ।
द्विभुजं वा हयारूढं[57] खड्गपाणिं सुरेश्वरम् ॥ ३८ ॥

.... .... ....

कल्किनं स्थापयेद् वैनं[58] शक्रस्थानं लभे[59]न्नरः ॥ ३९ ॥

॥ २३ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे त्रयोविंशः दशावतारप्रतिमालक्षणपटलः ॥ २३ ॥

[42] बाणं—B, C. [43] धनुमेव—B, C. [अ] देव—F. [44] यथा—A. [45] लाङ्गलं—B. [46] शङ्खं च शोभनं—B. [47] संस्थाने *omitted in* B. C. [48] शक्ति—A F. [49] विभुम्—B. C. F. [50] जयन्त्यसौ C. [51] बुद्धं—A. [52] प्रणकः—B. C. [53] चीरबाणंकृतं—A. [54] कामंतु—A. B. C. [55] पतिम् B. C. [56] बहुतूणधरं—B; बद्धतुणधरं C. [57] महिषारूढं—A. [58] चैनं—B. स्थापयिरवैवं—F. [59] भवे—B, C.

## चतुर्विंशः पटलः

श्रीभगवान् उवाच—

अधुना वासुदेवादीन् प्रवक्ष्यामि शृणुष्व मे।
आदिमूर्तिर्वासुदेवः पूर्वमेवोदितो मया ॥ १ ॥
दक्षिणोर्ध्वं गदा यस्य वामोर्ध्वे चक्रमुल्वणम्[1]।
ब्राह्मणौ पार्श्वगौ नित्यं शेषमन्यच्च पूर्ववत् ॥ २ ॥
द्वितीयो वासुदेवोऽयं द्वापरादौ स उच्यते।
द्विभुजो वाथ कर्तव्यो वामे शङ्खधरः प्रभुः[2] ॥ ३ ॥
वरदो दक्षिणेनाथ वासुदेवो द्विधोदितः[3]।
बलदेवश्चतुर्बाहुः कुण्डलैकविभूषितः ॥ ४ ॥
लाङ्गली मुषली देवो गदापद्मधरो[4] विभुः।
शङ्खचक्रगदापाणिः कर्तव्यो वरदोऽथवा ॥ ५ ॥
प्रद्युम्नस्तु चतुर्बाहुः शङ्खचक्रधरः शुभः।
चक्रं दक्षिणहस्तेऽस्य वामहस्ते धनुस्तथा ॥ ६ ॥
शङ्खं च दक्षिणे दद्याद् गदां वामे प्रदापयेत्[5]।
प्रद्युम्नं कारयेद् देवं सर्वलक्षणसंयुतम् ॥ ७ ॥
स्त्रियौ चैवास्य[6] कर्तव्ये खड्गचर्मधरे[7] शुभे।
रतिप्रीत्योर्मध्यगतं कम्बुग्रीवं सकार्मुकम् ॥ ८ ॥
द्विभुजं शरहस्तं वा प्रद्युम्नं कारयेद् बुधः।
अनिरुद्धः कम्बुग्रीवश्चतुर्बाहुः सुभूषितः[8] ॥ ९ ॥
दक्षिणेऽस्य गदा देया शङ्खचक्रौ तु[9] वामतः।
दक्षिणे च तथा पद्ममनिरुद्धस्य[10] दापयेत् ॥ १० ॥
नारायणश्चतुर्बाहुः[11] कार्यस्तल्लक्षणं मया।
मूर्तिद्वादशके पूर्वं कीर्तितं ब्रह्मणः[12] शृणु ॥ ११ ॥

[1] ...मेव च—B, C. [2] शुभः—B, C. [3] द्विधा मतः—B, C. [4] गदाचक्रधरो—B, C. [5] च दापयेत्—C. [6] वै चास्य—B, C. [7] शङ्खचक्रधरे—B, C. [8] सुशोभितः—B, C. [9] ते—B, C [10] पद्मोऽस्य—B. [11] नारायणं चतुर्बाहुं—B, C. [12] ब्राह्मणः—B, C.

चतुर्मुखश्चतुर्बाहुर्बृहज्जठरमण्डलः[13] ।
ऊर्ध्वं बद्ध[14]जटाजूटो लम्बकूर्चः समेखलः[15] ॥ १२ ॥
शोभनं दक्षिणे हस्ते दद्यादस्याक्षसूत्रकम्[16] ।
स्रुवं च दक्षिणे दद्याद् वामहस्ते तु कुण्डिकाम् ॥ १३ ॥
आज्यस्थालीं कुशोपेतां वामहस्ते नियोजयेत् ।
शङ्खचक्रगदापाणिः कार्यो वाथ चतुर्मुखः ॥ १४ ॥
सरस्वती च सावित्री वामदक्षिणसंस्थिते ।
कर्तव्या मुनयो वाथ परिवार्य व्यवस्थिताः ॥ १५ ॥
विनिविष्टः[17] सदा ब्रह्मा कार्यो[18] नेष्टस्तथा[19]न्यथा ।
नृसिंहवत् स्वमात्रा तु किञ्चिदभ्यधिकः स तु ॥ १६ ॥
विष्णुरष्टभुजः कार्यश्चतुर्बाहुरथापि वा ।
वैनतेयगतः सौम्यः सन्दष्टोष्टपुटोऽपि वा[20] ॥ १७ ॥
खड्गं गदां शरं दद्याद् दक्षिणे वरदोऽपरः ।
कार्मुकं खेटकं चक्रं शङ्खं वामेऽस्य दापयेत् ॥ १८ ॥
चतुर्भुजे गदा देया दक्षिणे वरदोऽपरः ।
वामे शङ्खं च चक्रं च विष्णुरेवं द्विधा मतः ॥ १९ ॥
नरसिंहश्चतुर्बाहुः शङ्खचक्रगदाधरः ।
शङ्खचक्रधरो वापि विदारितमहासुरः ॥ २० ॥
चतुर्बाहुर्वराहस्तु शेषपाणिपदे धृतः ।
धारयन् बाहुना[21] पृथ्वीं वामेन[22] कमलामथ ॥ २१ ॥
पादलग्ना धरा कार्या यदा लक्ष्मी भुजस्थिता ।
वराहं कारयेद् देवं[23] शङ्खचक्रगदाधरम् ॥ २२ ॥

[13] This line is partially omitted in C. [14] ऊर्ध्वमूर्ध्वं—B, C, E, F. [15] सुकूर्चः ससुमेखलः—B. [16] च दक्षसूत्रकम् B, C.; साक्षतसूत्रकम्—A. [17] विनिविष्टं—A. [18] कार्यां—A. [19] .. मथो A. [20] This line is omitted in A; in B, C, it is placed as the last hemistich of verse 16. Verses 16 and 17 omitted in E, F. [21] धारयेद् वाहनं—B, C. [22] वामनं—B, C. [23] कारयेद्देवं—B.

सप्ततालौ प्रशस्येते वराह-नरकेशरी (?)
नवतालावभ्यधिकौ[24] पुरस्तात् कथितौ तव ॥ २३ ॥
॥ २४ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके आदिकाण्डे
चतुर्विंशः नवव्यूहप्रतिमालक्षणपटलः ॥ २४ ॥

## पञ्चविंशः पटलः

श्रीभगवान् उवाच—

अतःपरं प्रवक्ष्यामि प्रतिमालक्षणं पुनः ।
अष्टबाहुं बुधः कुर्याद् देवं त्रैलोक्यमोहनम् ॥ १ ॥
गरुडासनगं देवं प्रथमे[1] वयसि स्थितम् ।
चक्रं खड्गं च[2] मुषलं साङ्कुशं दक्षिणे न्यसेत् ॥ २ ॥
शङ्खं शार्ङ्गं[3] गदां[4] पाशं वामहस्तेषु विन्यसेत् ।
लक्ष्मी सरस्वती कार्ये पद्मवीणासमन्विते ॥ ३ ॥
पुरुषोत्तमभेदांस्तु[5] वर्णयिष्यामि सत्तम ।
सङ्क्षेपेऽवसर[6]प्राप्तान् स्थापने तु यथा[7]विधि ॥ ४ ॥
विंशबाहुं[8] विश्वरूपं कुर्यात् तल्लक्षणं शृणु ।
चक्रं खड्गं च[9] मुषलमङ्कुशं पट्टिशं तथा ॥ ५ ॥
मुद्गरं च तथा पाशं[10] शक्तिं शूलं शरं तथा ।
दक्षिणेषु प्रदद्याद् वै[11] वामेषु शृणु साम्प्रतम् ॥ ६ ॥
शङ्खं शार्ङ्गं तथा[12] पाशं तोमरं लाङ्गलं तथा ।
परशुं छुरिकां दण्डं चर्म प्रक्षेपणं तथा ॥ ७ ॥

[24] ...वभ्यधिकौ—B C [1] प्रथमं –A. [2] शङ्खं चक्रं च—B, C. चक्रं शङ्खः च –E. [3] शङ्खशार्ङ्ग –A. [4] गदा –B [5] भेदांस्ते—B ; भेदास्ते –C. [6] ...वसरः B, C [7] तथा —B, C. [8] विंशद्बाहुं B, C, F. [9] शङ्खं च –B, C. [10] शङ्खं—B, C. [11] वै omitted in B, C. [12] गदा –B, C.

( नृसिंहोक्तं[८] परं मानं विश्वरूपस्य कीर्त्तितम् । )[13]
चतुर्मुखं दक्षिणेऽस्य त्रिनेत्रं वामतो न्यसेत् ।
स्तुवन्तो मुनयः कार्या विद्रवन्तो निशाचराः ॥ ८ ॥
वामपार्श्वेन शयितं कारयेज् जलशायिनम् ।
शेष[14]-पर्यङ्कगं देवं चतुर्बाहुं जनार्दनम् ॥ ९ ॥
श्रिया धृतैकचरणं सर्वालङ्कारभूषितम् ।
देवीभिर्विमलाद्याभिः सेव्यमानमितस्ततः[15] ॥ १० ॥
नाभ्युत्थ[16]पङ्कजारूढ पितामहसमन्वितम् ।
रुद्रार्धदेहं वा कुर्याच् चतुर्बाहुं जनार्दनम् ॥ ११ ॥
ईशानं दक्षिणे पार्श्वे देवं शूलविधारणम्[17] ।
गदाचक्रधरं चैव[18] मुकुटेन विभूषितम् ॥ १२ ॥
जटाचन्द्र[19]धरं रौद्रं[20] वैष्णवं रत्नमण्डितम् ।
कुण्डलोद्द्योतितं[21] चैकमपरं नागकुण्डलम् ॥ १३ ॥
व्याघ्रचर्मपरीधानमपरं वस्त्र[22]भूषितम् ।
ब्रह्मसूत्रधरं चैकमन्यन्नागोपवीतिनम्[23] ॥ १४ ॥
गौरी चैकेन पार्श्वेन लक्ष्मी चैकेन संस्थिता ।
एवं लक्षणसंयुक्तं कारयेद्धरिशङ्करम् ॥ १५ ॥
ममैव[24] लक्षणं वक्ष्ये तन्निबोध सुरोत्तम ।
वराहवन्मुखं कार्यमायामाद् विंशदङ्गुलम् ॥ १६ ॥
वक्त्रदेशे हनू कार्ये[25] आयने तु[26] चतुष्कले[27] ।
सार्धकलं तु सृक्कण्ये (?) ततश्चाष्टाङ्गुलं मुखम् ॥ १७ ॥

८ नृसिंहान्तं –B, C. 13 B, C. D, E, F. have this additional line here. 14 शेषं—B. 15 Verses 10 and 11 are omitted in B. 16 नाभ्युत्थं –C; अमुष्य –A, D. यन्मुख –F.; स्वन्मुख –E. 17 शूलं विधारिणम् –B, C. 18 चास्य –A. 19 चक्र A, B, C, E, F. 20 देवं –A. E F. 21 कुण्डलद्योतितं –B. C. 22 श्रस्त –B, मस्त—D. 23 ब्रह्मसूत्रधरं चैव मालां –B. नागोपवीतकम् All except E. 24 मयैव –A ; मायैव –B ; ममेव—C. 25 हनुः कार्य –C. 26 च—A. 27 सुपुष्कलं –A, D.

द्व्यङ्गुलं घ्राणरन्ध्रं तु कुटिलं त्र्यङ्गुलायतम्[28] ।
आयामाद् द्व्यङ्गुले कार्ये द्व्यङ्गुले चाधिकेऽक्षिणी ॥ १८ ॥
पञ्चाङ्गुलौ स्मृतौ कर्णौ त्र्यङ्गुलं[29] विस्तृतौ[30] तु तौ[a] ।
कर्णान्तरं[31] चतुर्नेत्रं कलैकं चोन्नतं तु[b] तत् ॥ १९ ॥
तलैकविस्तारा[32] ग्रीवा यवाङ्गुलसमा मता[33]
घण्टाविभूषिता ग्रीवा शिरश्चालकभूषितम् ॥ २० ॥
शेषं चतुर्भुजं देहं नृसिंहस्येह[34] कीर्तितम् ।
वामहस्तेऽथ कुर्वीत वेदांश्चत्वारः सुव्रत ॥ २१ ॥
त्वं चा[35]प्यग्रे स्थितः कार्यो वेदग्रहपुरःसरः ।
अपरे वामहस्ते तु शङ्खं दद्यात् सुशोभनम् ॥ २२ ॥
दक्षिणे द्वितये कुर्याद्[36] गदां चक्रं विचक्षणः ।
शेषनागधृतं पादं वामं कार्यं ममानघ ॥ २३ ॥
दक्षिणं कूर्मपृष्ठस्थं पादं कुर्यात् सदैव मे[37] ।
शङ्खचक्रगदावेदपाणिं वा कारयीत माम् ॥ २४ ॥
अश्ववक्त्रं चतुर्बाहुमेवमेव[38] व्यवस्थितम् ।
पुष्करासनमध्यस्थं देवीद्वितयसंयुतम्[39] ॥ २५ ॥

. . . . .

एवं ममार्चा कर्तव्या सर्वज्ञत्वमभीप्सुभिः ॥ २६ ॥
२५ । इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे पञ्चविंशः प्रतिमालक्षणपटलः ॥ २५ ॥

[28] द्व्यङ्गुलायतम् —B, C [29] द्व्यङ्गुलं —B, C. [30] विस्तृतं —B, C [a] ततः —E, F.
[31] वर्णान्तर —A. [b] च —E, F. [32] ...विस्तृता —B, C. अनेकविस्तारा —E, F.
[33] पञ्चाङ्गुलसमायता —B, C, E, F. [34] ..स्यैव —B; ...स्येव —C [35] पश्चात्प्यग्रे —B, C.
[36] दद्यात् —B, C. [37] सदैवतम् —A, D, E, F. [38] ..मेवमेवं —B, C. [39] देवं
द्वितयसंस्थितम् —B, C.

## षड्विंशः पटलः

श्रीभगवान् उवाच—

अतःपरं प्रवक्ष्यामि ग्रहाणां लक्षणं तव।
आदित्यो द्विभुजः प्रोक्तो युवा लक्षणलक्षितः॥ १॥
कम्बुग्रीवः पीनवक्षा अलकालंकृतः शुभः।
सर्वाभरणसंयुक्तो दीप्तः सौम्यो त्रिलोचनः॥ २॥
पद्मस्थः खेटकाहस्तः[1] पादो वा (?) रथसंस्थितः
एकचक्रो रथस्तस्य सप्ताश्वोऽरुणसारथिः॥ ३॥
हस्तयोः पङ्कजौ कार्यौ तस्य स्कन्धमितौ शुभौ।
दण्डपिङ्गलकौ कार्यौ प्रतिहारौ[2] विभूषितौ॥ ४॥
खड्गखेटकाहस्तस्तु रथस्थो दण्डनायकः।
मसीभाजनहस्तस्तु[3] पिङ्गलो लेखनीकरः॥ ५॥
संज्ञा[4] च निष्क्रुता चैव कार्ये पार्श्व[5]द्वये स्थिते।
शरकार्मुकहस्ते ते वामदक्षिणसंस्थिते[6]॥ ६॥
आदित्यं कारयेद् देवं सर्वरोगविनाशनम्।
चित्रे तु लेखयेद् भानुं कञ्चुका[7]गुप्तविग्रहम्॥ ७॥
भेदानस्यापरान् सौर्ये[8] कथयिष्यामि तेऽखिलान्[9]।
सोमः सौम्याननः कार्यो द्विभुजा[10]लंकृतः शुभः॥ ८॥
निबिडाङ्गो[11]ऽङ्गारकस्तु सर्वलक्षणसंयुतः।
कामरूपो बुधः कार्यो गुरुः सौम्योऽक्षसंस्थितः॥ ९॥
काणस्तु[12] भार्गवः प्रोक्तः खञ्जस्तु सौरि[13]रुच्यते।
करालास्यः[14] स्मृतो राहुश्छिन्नदेहः कृताञ्जलिः॥ १०॥

[1] खेटिकागुप्तः—A; खेटकागुप्तः—C, D, E, F. [2] प्रतोहारौ—A. [3] ...हस्तं तु—B, C.
[4] राज्ञी—A, D, E, F. [5] पार्श्वं—A. [6] This line is omitted in A, D, E, F.
[7] कञ्चुर्वा—B, C. [8] ...स्यापरान् दौर्ये—A; [9] ...खिलानां—B, C. [10] द्विभुजो—B.
[11] निडालाङ्गा—B, C. [12] कालस्तु—A. [13] शिवि—A. [14] करालस्थः—A.

भुजगार्धतनुः केतू रूपेणातीव धूसरः[15] ।
सव्योरुस्थितदोर्दण्डा दक्षिणेनाभयप्रदाः[16] ॥ ११ ॥
द्विभुजालंकृताः सर्वे ग्रहाः कामफल[17]प्रदाः ॥ १२ ॥

॥ २६ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे षड्विंशः ग्रहप्रतिमालक्षणपटलः ॥ २६ ॥

## सप्तविंशः पटलः

श्रीभगवान् उवाच—

ग्रहाणां लक्षणं प्रोक्तं मातॄणां शृणु साम्प्रतम् ।
वीरभद्रो वृषारूढो (वीणाहस्तस्त्रिलोचनः ॥ १ ॥
मातॄणामग्रतः कार्यो जटाखण्डेन्दुमण्डितः ।
द्विभुजा च[1] चतुर्वक्त्रा वैधसो वेश[2]धारिणी ॥ २ ॥
हंसारूढा च[3] पद्मस्था[4] सर्वाभरणभूषिता[5] ।
तस्या दक्षिणहस्ते तु प्रदातव्या गुणास्तदा[6] ॥ ३ ॥
कमुण्डलु[7]र्वामहस्ते योगपट्टेन वेष्टिता ।
चतुर्भुजा तु रुद्राणी वृषारूढा त्रिलोचना ॥ ४ ॥
शूलं शरं दक्षिणे तु वामे वज्रं च[8] कार्मुकम् ।
स्कन्दरूपा च कौमारी बालाकारा सुमांसला ॥ ५ ॥
मयूरवर[9]मारूढा ) द्विभुजा शक्ति[10]धारिणी ।
चतुर्भुजा वैष्णवी स्याच्छङ्खचक्रगदायुधा ॥ ६ ॥

[15] धूरसः—B. [16] साव्यवस्थिता दोर्दण्डा दक्षिणोभयप्रदाः B. [17] . कुल—B.

( ) Portions within brackets are omitted in E, F. [1] तु—B, C. [2] वेध—A. [3] हंसारूढाश्च—B, B. [4] पद्मस्थ -B, C. [5] संयुक्ता—B, C. [6] ...तथा—B, C. [7] कमण्डलुं—A. [8] सर्वं च—B, C. [9] मयूरपर—B, C. [10] शान्ति—A.

पक्षिराजसमारूढा सर्वाभरणभूषिता[11] ।
वराहास्या तु वाराही बृहत्कण्ठा महोदरा[12] । ७ ॥
महिषस्था दण्डहस्ता शङ्खचक्रगदायुधा[13] ।
सप्ततालां तु वाराही[14] कर्तव्या शुभलक्षणा ॥ ८ ॥
माहेन्द्री तु[15] गजारूढा द्विभुजा वज्रधारिणी ।
नवयौवनसंयुक्ता[16] भूषिता[17] बहुलोचना ॥ ९ ॥
चतुर्भुजा तु चामुण्डा कोटराक्षी त्रिलोचना ।
निर्मांसा अस्थिसारा च[18] ऊर्ध्वकेशी कृशोदरी[19] ॥ १० ॥
नागयज्ञोपवीताङ्गी द्वीपिचर्मोत्तरच्छदा ।
मुण्डमालाधरा देवी अस्थिखण्डै[20]र्विभूषिता ॥ ११ ॥
कपालं पट्टिशं वामे शूलं कर्त्री[21] च दक्षिणे ।
शवारूढा सुदुष्प्रेक्षा चामुण्डेयं प्रकीर्तिता ॥ १२ ॥
विनायको नराकारो बृहत्कुक्षिर्गजाननः[22] ।
त्रिनेत्रोऽथ बृहच्छुण्डो नागयज्ञोपवीतवान् ॥ १३ ॥
मुखं[23] सप्तकलं तस्य विस्तारेण सुरोत्तम ।
दैर्घ्येणाष्टकलं वक्त्रं शुण्डं[24] षट्त्रिंशदङ्गुलम् ॥ १४ ॥
कलाद्वादशबाहु[25]स्तु ग्रीवा सार्धकलोच्छ्रिता ।
पीनवक्षा गणेशस्तु उन्नतोरुः[26] प्रशस्यते ॥ १५ ॥
षट्त्रिंशदङ्गुलायामं कण्ठगुह्यान्तरं भवेत् ।
समं सुशोभनं तद्वद् द्व्यङ्गुला नाभिरिष्यते ॥ १६ ॥
ऊरू जङ्घे तथा पादे कर्तव्ये द्वादशाङ्गुले[27] ।
द्व्यङ्गुलं चोच्छ्रितौ पादौ द्वादशाङ्गुलमायतौ[28] ॥ १७ ॥

[11] ...संयुक्ता—B, C. [12] वराहस्य तु वाराहं बृहत्कण्ठा महोदया—B, C. [13] ...गदाधरा—B, C. [14] व्यवहित—B. [15] च—A. [16] ...संसक्ता—B, C. [17] भूषणा—B, C. [18] तु—C. [19] ऊ र्ध्वकेशा दिगम्बरी—B ; ऊर्ध्वकेशा कृशोदरी—C. [20] अस्तिखण्डविभूषिता—B. [21] शूलकर्णे—B, शूलकर्त्री—C. [22] रजाननः—B, C. [23] अथ—B, C. [24] शुण्डं—B. [25] ...नाम—B ; ...नाहा तु—A, C, D. [26] तुन्दाभोरुः—B, C. [27] कर्तव्या द्वादशाङ्गुलैः—B, C. [28] ...यामतौ—B, C.

सुदन्तं (षड्‌ ?) दक्षिणे हस्ते परशुं च निवेशयेत् ।
लड्डुकैः पूर्णपात्रं तु उत्पलं वामतो न्यसेत् ॥ १८ ॥
सुमुखश्च बिडालाक्षौ पार्श्वद्वयव्यस्थितौ ।
गणेशलक्षणं प्रोक्तं स्कन्दस्य प्रोच्यते[29]ऽधुना ॥ १९ ॥
मयूरवरमारूढो द्विभुजो बालरूपधृक्[30] ।
कुक्कुटं वामहस्ते तु शक्तिं दक्षिणतो न्यसेत् ॥ २० ॥
द्विभुजस्तु समाख्यात एकवक्त्रोऽग्निजस्त्वयम्[d] ।
षण्मुखः षड्भुजो वापि भुजैर्द्वादशभिस्तथा ॥ २१ ॥
स्थापितः[31] कार्त्तिकेयो वै दर्शनात् पापनाशनः ।
... .... .... ॥ २२ ॥

॥ २७ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे सप्तविंशः मातृलक्षणपटलः ॥ २७ ॥

## अष्टाविंशः पटलः

श्रीभगवान् उवाच

अतःपरं प्रवक्ष्यामि लोकेशानां तु लक्षणम् ।
ऐरावतगजारूढो वज्रहस्तः सुराधिप ॥ १ ॥
द्विभुजो बहुनेत्रश्च सर्वाभरणभूषितः
सर्वलक्षणसंपूर्णः कार्यस्त्विन्द्रो नृपोपमः[m] ॥ २ ॥
ज्वालामण्डलमध्यस्थः कुर्चालः श्मश्रुलस्तथा ।
योगपट्टासनोपेतो[1] ब्रह्मसूत्रविभूषितः ॥ ३ ॥
अविस्थो[n]ऽथ द्विबाहुर्वै कार्यो[2] वह्निर्विलोहितः ।
दक्षिणे चाक्षसूत्रं तु कुण्डिकां[3] वामतो न्यसेत ॥ ४ ॥

[29] चोच्यते—B. [30] वाम—B. [c] शिरूपकः—E. [d] अग्निजस्तु यः—E. [31] स्थाप्यते—B. C. [m] नृपोत्तम—E. F. [1] योगपट्टसमोपेतो—B. C. [n] अधिस्थो—Var. ed. [2] कार्यं—B. C. [3] दण्डिकां—B. C.

पाश[4]दण्डायुधोपेतो[5] द्विभुजो महिषासनः ।
वैवस्वतः पीनकायो दिव्याभरणभूषितः ॥ ५ ॥
विरूपैः किंकरैर्युक्तो लक्षणैर्विविधैर्युतः[थ] ।
पार्श्वद्वयेऽस्य पुरुषौ कर्तव्यौ[6] भीषणाकृती ॥ ६ ॥
द्विबाहुः पीनदेहस्तु[7] खड्गहस्तोऽञ्जनप्रभः ।
विभूषितः सदा कार्य ऋक्ष[8]गोरक्षसां पतिः[9] । ७ ॥
द्विबाहुः पाशहस्तस्तु मकरस्थो विभूषितः ।
कर्तव्यो वरुणो देवः कुण्डलाभ्यां विभूषितः । ८ ॥
द्विबाहुर्ध्वजहस्तस्तु[द] मृगारूढः स्वलंकृतः[10] ।
सर्वाभरणसंयुक्तः कार्यो वायुः[11] सुरोत्तमः ॥ ९ ॥
सुपीनदेहो यक्षेशो[12] हारकेयूरभूषितः ।
सर्वलक्षणसंपूर्णो गदाशङ्खधरो[13]ऽनघः ॥ १० ॥
नानारत्नोज्ज्वलेनाथ मुकुटेन विभूषितः ।
कर्तव्यो वामनाकारो द्विभुजो नरवाहनः ॥ ११ ॥
वृषारूढश्चतुर्बाहुः शङ्खकुन्देन्दुसप्रभ[14] ।
कपालं वामहस्तेऽथ शूलं हस्तेऽथ[15] दक्षिणे ॥ १२ ॥
नागपाशं तथा वामे दक्षिणेन वरप्रदः ।
ईशानं कारयेद् देवं सर्वविद्येश्वरं प्रभुम् ॥ १३ ॥
अथवा सर्वलोकेशान् स्थितान् कुर्याद् विचक्षणः ।
यथोक्तलक्षणोपेतान् पद्मपीठस्थितान् बुधः ॥ १४ ॥

॥ २८ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे अष्टाविंशः लोकेशप्रतिमालक्षणपटलः ॥ २८ ॥

[4] पाद A. [5] दण्डधरोपेतो —B, C. [थ] .. धरपि —E, F [6] कर्तव्ये B, C. [7] पीनबाहुश्च A, B, F. [8] वक्ष्ये—B, C. [9] प्रति—B, C. [द] ...वज्रहस्तस्तु—A, B, C. [10] सुलक्षणः —B C. [11] कार्योऽव्ययः—B, C. [12] .. हयक्षेशो —A ; B, C. [13] शङ्खचक्रधरो B, C. [14] ...सुप्रभः—B, C. [15] हस्ते तु —B, C.

## ऊनत्रिंशः पटलः

श्रीभगवान् उवाच—

अतःपरं प्रवक्ष्यामि रुद्रमुर्तेस्तु लक्षणम् ।
पद्मासनश्चतुर्बाहुर्नागयज्ञोपवीतवान् ॥ १ ॥
व्याघ्रचर्मपरीधानो जटाखण्डेन्दुमण्डितः[1] ।
कपालं कुण्डिका वामे त्रिशूलं दक्षिणे तथा ॥ २ ॥
गलन्तिकां तथा दद्याद् दक्षिणे सुरसत्तम ।
कुष्माण्डश्च[2] तथा भृङ्गी वामदक्षिणसंस्थितौ ॥ ३ ॥
एवं तु कारयेद् रुद्रं सर्वलक्षणलक्षितम् ।
त्रिशूलधृक् तथा वामे वरदो[3] दक्षिणेन तु ॥ ४ ॥
द्विभुजोऽयं हरः साक्षात् सर्वकामफलप्रदः[4] ।
अर्धनारीश्वरस्येह संक्षेपाल्लक्षणं शृणु ॥ ५ ॥
हरार्धं दक्षिणं[5] प्रोक्तमुमार्धं वाममुच्यते ।
शङ्करार्धं जटाबद्धमर्ध[6]चन्द्रविभूषितम् ॥ ६ ॥
गौर्यर्धं सालकं[क] कार्यं[7] मौलिना भूषितं[8] शिरः ।
शिवार्धे कुण्डलं कर्णे[9] उमार्धे बालिका[ख] भवेत् ॥ ७ ॥
गौर्या भुजद्वये[10] कार्यं केयूरं कङ्कणं तथा ।
कुण्डिकां कमलं चैव दद्याद् देव्या भुजद्वये ॥ ८ ॥
अक्षसूत्रं त्रिशूलं च तदर्धं[11] हारमेव च ।
उपवीतं हरार्धे च[12] ऊर्ध्वलिङ्गं व्यवस्थितम् ॥ ९ ॥
व्याघ्रचर्म तथा कट्यां सर्पमेखलसंयुतम् ।
दिव्यवस्त्रसमोपेतं गौर्यर्धं[13] मेखलायुतम् ॥ १० ॥

[1] जटामुण्डेन्दु—B, C. जटाखण्डेन्दु भूषितः—E, F. [2] कुष्माण्डश्च—B, C. [3] वरदे—B. [4] .. प्रदम्—A [5] दक्षिणे—B, C. [6] अर्ध—B, C. [क] बालकं—Var. ed. E, F. [7] कार्या—B, C. [8] मौलिविभूषितं B, C. [9] कुण्डलकर्णे—B, C. [ख] बालिकं E. [10] भुजद्वयं—A, D, E [11] स्तनयोर्नीलतं वामे तदर्धं—A, D, E, F; .. तदूर्ध्वं B, C. [12] तु—B, C. [13] गौर्याङ्गे—B, C.

शिवस्य दक्षिणः पादः पद्मोपरि व्यवस्थितः ।
किञ्चिदभ्युन्नतो वामे नायिका भूषिताङ्गुलिः ॥ ११ ॥
सालक्तकं च कर्तव्यो[14] नूपुरेण विभूषितः[15] ।
अर्धनारीश्वरः प्रोक्त उमेशं शृणु सत्तम ॥ १२ ॥
सर्वलक्षणसंपूर्णो[16] द्विभुजोऽथ त्रिलोचनः ।
व्याघ्रचर्मपरीधानो जटाखण्डेन्दुभूषितः ॥ १३ ॥
चित्राम्बरधरा गौरी[17] द्विभुजालंकृता शुभा ।
अर्धचन्द्रासनेनाथ उपविष्टो हरः स्मृतः ॥ १४ ॥
सव्योरुसंस्थिता गौरी शङ्करेणाथगूहिता[18] ।
हरस्य दक्षिणे हस्ते दद्यादिन्दीवरं शुभम् ॥ १५ ॥
मध्यस्कन्धे शिवस्येह[19] हस्तं गौर्यास्तु दक्षिणम् ।
आदर्शं च तथा वामे ह्युमेशौ कीर्तितौ मया ॥ १६ ॥
अष्टादशभुजं कुर्याद् भैरवं दैत्यमर्दनम् ।
नानाभरणसंयुक्तं नानायुधधरं विभुम् ॥ १७ ॥
मुण्डमालाधरं देवं व्यादितास्यं[20] सुशोभनम् ।
लेलिहानमहाजिह्वं[21] तीक्ष्णदंष्ट्रोग्रलोचनम्[22] ॥ १८ ॥
प्रमथैर्यातुधानैश्च[23] मातृभिः परिवारितम् ।
श्मशानारण्यदेशे तु स्थापयेद् भैरवं हरम् ॥ १९ ॥
लक्षणं तस्य वक्ष्यामि तन्निबोध सुरत्तम ।
मुखमष्टकलं[24] कार्यं विवृतास्यं सुभीषणम्[25] ॥ २० ॥
प्रसृतं नयनं[26] कार्यं शिरोमुण्डेन्दुभूषितम् ।
कथितं भैरवेशस्य वक्षोदेशो[27]ऽधिको गतः[28] ॥ २१ ॥

[14] कर्तव्ये—A. [15] विभूषिता—A. [16] ... संयुक्तो—B, C. [17] देवी—B, C. [18] शङ्करानला-गृहीताः—A. ...णाथ गूहिता—E, F. [19] शिवस्यैव—B, C. [20] व्यादितास्य—B. [21] महा—omitted in A. [22] तीक्ष्णदीप्तोग्रलोचनम्—A, E. F. [23] This verse is partially omitted in B. [24] अष्टाङ्गुलं—B, C. [25] सुशोभनम्—B, C. [26] प्रभूतनयनं—B, C. [27] ... देशा—B. [28] मया—C.

नेत्रत्रयाधिकं वक्षः कटिः पञ्चकलाधिका[ग] ।
त्रि[29]नेत्राद्यधिका चोरू जानुपाणिः कलाधिका (?) ॥ २२ ।
जङ्घे सार्धकले वृद्धे[30] तद्विभागेन वाग्रतः[31] ।
किञ्चिदूर्ध्वौ[32] तथा पादौ बाहुमूले कलाधिकौ ॥ २३ ॥
उपबाहोस्तु पर्यन्तं यावद्धीनतरं[33] क्रमात् ।
सुभीषणो तथा वक्रे दंष्ट्रेऽङ्गुलविनिर्गते ॥ २४ ॥
त्रिशूलाग्रेण संविध्य प्रक्षिप्तसुमहासुरः[घ] ।
धनुःकृपाणखट्वाङ्गशक्तिकङ्कालपाशधृक् ॥ २५ ॥
शरखेटकहस्ते तु कर्तृकामुद्गरायुधः ।
वराभयप्रदश्चापि गदापरशुधृक् तथा । २६ ॥
कपालमुण्डधारी च नागयज्ञोपवीतवान् ।
व्याघ्रचर्मपरिधानः शस्यते भैरवेश्वरः ॥ २७ ।
एकवक्त्रोऽयमाख्यातः पञ्चवक्त्रोऽथवा भवेत् ।
कर्तव्यो भैरवस्त्वेवं सर्वकामफलप्रदः ॥ २८ ॥

॥ २९ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे ऊनत्रिंशः रुद्ररूप[34]प्रतिमालक्षणपटलः ॥ २९ ॥

## त्रिंशः पटलः

श्रीभगवान् उवाच—

अतःपरं प्रवक्ष्यामि गौर्या लक्षणमुत्तमम् ।
द्विभुजा वाम्बिका त्र्यक्षा सिंहारूढा सुभूषिता ॥ १ ।
त्रिशूलं दक्षिणे हस्ते वामहस्ते तु दर्पणम् ।
चतुर्भुजा वा पद्मस्था त्रिशूलवरधारिणी ॥ २ ॥

[ग] कलाधिकः -F. [29] द्विनेत्र—B. [30] वृक्षे—A. [31] वायुतः—C. [32] किञ्चिद्वद्धौ—A.
[33] यावद् ज्ञानतरं—B, C. [घ] प्रक्षिप्तश्च महासुरः—E, F. [34] रूप—found in B only.

गलन्ती[1]-कुण्डिकाहस्ता दक्षिणं वरदं करम् ।
एवं द्विधा ते[2] कथिता[3] अम्बिकेयं सुरेश्वरी ॥ ३ ॥
ललितापि च कर्तव्या गणेशगुहसंस्थिता[क] ।
चतुर्भुजा च पद्मस्था शोभना[4]दर्शधारिणी ॥ ४ ॥
भुजस्तस्याश्च[5] कर्तव्यो वामः स्कन्दशिरोगतः[6] ।
श्रीफलं दक्षिणे देयं नानाभरणभूषिता[7] ॥ ५ ॥
चण्डिकालक्षणं वक्ष्ये तन्मे निगदतः शृणु ।
कार्या दशभुजा देवी चण्डिकाष्टभुजाथवा ॥ ६ ॥
शूलं खड्गं तथा चक्रं शक्तिं चेषुं च[8] दक्षिणे ।
नागपाशं तथा चर्म परशुं चाङ्कुशं तथा ॥ ७ ॥
वामहस्तेषु[ख] दातव्यं धनुश्चा[9]कर्णपूरितम् ।
सिंहारूढा तथा देवी सर्वलोकेश्वरेश्वरी[10] ॥ ८ ॥
महिषश्च तथा कार्यो भगवत्यग्रतः[11] स्थितः ।
अवज्ञया तु[12] दैत्येन्द्रं देवी हन्तुं समुद्यता ॥ ९ ॥
त्रिशूलेन हतो गौर्या नागपाशेन पाशितः[13] ।
अधस्तान्महिषस्येह शिरश्छेद[14]समुत्थितः ॥ १० ॥
मायावी महिषो दैत्यः संक्रुद्धो दंशिताधरः ।
सिंहस्थं दक्षिणं पादं वामं[15] महिषपृष्ठगम् ॥ ११ ॥
उत्क्रान्त्या रुधिरं दैत्यं वमन्तं संप्रदर्शयेत् ।
एवं लक्षणसंयुक्ता चण्डिका संप्रकीर्तिता ॥ १२ ॥

[1] शलन्ती—B, C. [2] विधात्रे—B; विधा ते—C. [3] कथिता—omitted in B. [क] गणेशहस्तसंस्थिता—E, F. [4] दशनादर्श—A. [5] . स्याद्य—B. [6] वामस्कन्ध—A. वामस्कन्द—E, F. [7] .. भूषिताम्—B, C. [8] तु A. [ख] वामहस्तेऽथ—D. [9] धनुश्च कर्ण—A. [10] ...रेश्वरम्—A. [11] सम्भवत्यग्रतः—A. [12] च—B.; अवज्ञातं च—A, C. [13] पालितः—B, C. [14] शिरश्छेदं B, C.; ...समन्वितः—A, B, C. [15] वाम—B.

तयोर्गौर्यादिभेदेन कार्या सानेकधा पुनः ॥ १३ ॥

॥ ३० ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे त्रिंशः गौरीप्रतिमालक्षणपटलः ॥ ३० ॥

## एकत्रिंशः पटलः

श्रीभगवान् उवाच—

लिङ्गस्य लक्षणं वक्ष्ये तन्मे निगदतः[1] शृणु ।
दैर्घ्यार्धमष्टभिर्भक्त्वा[2] त्यक्त्वा भागत्रयं ततः ॥ १ ॥
विष्कम्भं भुक्त[3]भागैस्तु चतुरस्रं तु कारयेत् ।
आयाममूर्तिभिर्भक्त्वा एकद्वित्रिक्रमान्न्यसेत् ॥ २ ॥
ब्रह्मविष्णुशिवाङ्केषु वर्धमानोऽयमुच्यते ।
चतुरस्रेऽस्य[4] कर्णार्धं गृह्य कोणेषु लाञ्छयेत्[5] ॥ ३ ॥
अष्टास्रं वैष्णवं भागं सिध्यत्येव न संशयः ।
षोडशास्रं ततः कुर्याद् द्वात्रिंशास्रं ततः पुनः ॥ ४ ॥
चतुःषष्ट्यस्रकं[a] कृत्वा वर्तनं* साधयेत् ततः ।
वर्तयेदथ लिङ्गस्य शिरो वै देशिकोत्तमः ॥ ५ ॥
विस्तारमस्य लिङ्गस्य अष्टधा संविभाजयेत्[6] ।
भागार्धं तु संत्यज्य[7] चक्राकारं[8] शिरो भवेत् ॥ ६ ॥
त्रिषु भागेषु सदृशम् आयामपदविस्तरम्[क] ।
तद्विभागसमं लिङ्गं सर्वकामफलप्रदम् ॥ ७ ॥

[1] निगदितः –B, C. [2] वङ्क भिरयत्तवा —A ; ...मम्बुभिर्भत्या अत्वा —Var. ed.
[3] भूक्त =A ; B, C. omit this word ; भूत—E [4] .. यस्य – B, C. चतुरस्रस्य —F.
[5] कोणेषु प्रोञ्चयेत् –B, C ; केशेषु—A. (a) चतुःषष्ट्यंशकं –E, F. *वर्धनं –E, F.
[6] सन्विभाजयेत् -B, C. [7] संत्यक्त्वा -A, D, E. [8] चन्द्राकारं -B. C. [क] अपोशयश्च विस्तरम्
-D. F. सदृशायापाशयश्च —E.

दैर्घ्यं तस्य चतुर्थेन विष्कम्भं[b] देवपूजिते ।
सर्वेषामेव लिङ्गानां लक्षणं शृणु साम्प्रतम् ॥ ८ ॥
मध्यसूत्रं[9] समास्फाल्य ब्रह्मरुद्रान्तिकं बुधः ।
षोडशांशस्तु लिङ्गस्य षड्भागैर्भाजितो यदा ॥ ९ ॥
तदा अमूल[10]सूत्राभ्यां (?) मानिमन्तर[11]मुच्यते ।
यवाष्टमुत्तमे कार्यं[12] शेषाणां यवहानितः ॥ १० ॥
अर्चा[13]भागं त्रिधा कृत्वा ऊर्ध्वमेकं परित्यजेत् ।
अष्टधा तत् त्रयं[14] कृत्वा ऊर्ध्वभागत्रयं त्यजेत्[15] ॥ ११ ॥
ऊर्ध्वं तु पञ्चमाद् भागाद् भ्राम्यलेखां प्रलम्बयेत्[16] ।
भागमेकं परित्यज्य सङ्गमं कारयेत् तयोः ॥ १२ ॥
एतत् साधारणं प्रोक्तं लिङ्गानां लक्षणं मया[17] ।
सर्वसाधारणां वक्ष्ये पिण्डिकां तां निबोध मे[18] ॥ १३ ॥
ब्रह्मभागप्रवेशं* च ज्ञात्वा लिङ्गस्य चोच्छ्रयम् ।
न्यसेद् ब्रह्मशिलां विद्वान् सम्यक् कर्म शिलोपरि[ख] ॥ १४ ॥
तथा समुच्छ्रयं ज्ञात्वा पिण्डिकायां विभाजयेत् ।
द्वि[19]भागमुच्छ्रितं गीतं[c] विस्तारं लिङ्गसम्मितम्[d] ॥ १५ ॥
द्विभागमन्ततः[20] खातं कृत्वा पीठं विभाजयेत् ।
स्वमानार्धं[21] त्रिभागेन बाहुल्यं परिकल्पयेत् ॥ १६ ॥
बाहुल्यस्य त्रिभागेन[e] मेखलामथ कल्पयेत् ।
खातं[22] स्यात् मेखलातुल्यं[23] क्रमान्निम्नं (म्नं ?) तु कारयेत् ॥ १७ ॥

(b) बिम्बस्थं—F. [9] मध्यं सूत्रं—B, C. [10] तदा स—A ; तद्वैय—B, C. ; तदाप्यशूल—F. ; तदास्य शृणु सूत्राभ्यां—E. [11] मानिकान्तर—E. This line is partially omitted in B, C. [12] ...तमैः कार्यं—B, C. [13] आर्य—B, C. ; अष्टा—E. [14] अष्टधात्रद्वयं—B, C. [15] यजेत्—B. [16] पुनस्त्वयेत्—B, C. ; ऊर्ध्वं तु पञ्चमात्रास्य लेखाप्रणमयेत्—E, F. [17] लक्षणानू मया—B, C. [18] निबोधय—B, C. *...प्रबोधं—E, F. [ख] शिरोपरि—F. [19] त्रि—B, C. [20] त्रिभागमध्यतः—B, C. त्रिभागमन्ततः—A, D. (c) पीतं—A, B, C, D. (d) संस्थितं—E. [21] प्रमाणार्धं—A, D, E, F. (e) विभागेन—A, B, D. [22] स्यातं—B, C. [23] तुल्य—B, C.

मेखलाषोडशांशेन खातं वा तत्प्रमाणतः ।
उच्छ्रायं यत् तु पीठस्य विकारांशं तु कारयेत् ॥ १८ ॥
भूमौ प्रविष्टमेकं तु भागैकैकेन यष्टिका[24] ।
कण्ठं भागैस्त्रिभिः कार्यं भागैकेन च पट्टिका[25] ॥ १९ ॥
द्व्यंशेन चार्धयष्टि[26] तु एकांशांशेति यष्टिका[27] ।
भागं भागं प्रविष्टं तु यावत् कण्ठं[28] ततः पुनः ॥ २० ॥
निर्गमं भागमेकं तु यावद् वै काययष्टिका[29] ।
प्रणालस्य[30] त्रिभागेन निर्गमस्तु त्रिभागतः ॥ २१ ॥
मूले तुल्यप्रविष्टारमग्रे द्व्यंशेन चार्धतः ।
कथं निम्नस्तु कुर्वीत खातं[ग] तच्चोत्तरेण वै ॥ २२ ॥
...　　...　　....　　....
पिण्डिकासहितं लिङ्गमेतत् साधारणं स्मृतम् ॥ २३ ॥

॥ ३१ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे एकत्रिंशः लिङ्गलक्षणपटलः । ३१ ॥

## द्वात्रिंशः पटलः

श्रीभगवान् उवाच —

अतःपरं[1] प्रवक्ष्यामि प्रतिमानां तु पिण्डिकाम् ।
दैर्घ्येण प्रतिमातुल्या[2] तदर्धेन तु विस्तृता । १ ॥

[24] भोगेकेन च पट्टिका—B, C. [25] भागैकैकेन पट्टिका—A ; भागैकैकेन यष्टिका—D. E, F. [26]...पट्टिं—B, C. [27] एकांशा शेषाट्टिका—B, C. [28] यावकं तु—A. यावत् कर्णं—E. [29] काशाट्टिका—B, C. [30] प्राणालस्य—B, C. [ग] तच्च -D. [1] C. omits परं ।
[2] ,, तुल्य—B

उच्छ्रितायामतोऽर्धेन[3] सुविस्तारार्धभागतः ।
त्रिभागेन तु बाहुल्यं* त्रिभागेन तु मेखला ॥ २ ॥
खातं तु[4] तत्-प्रमाणं तु किञ्चिदुत्तरतोन्नतम् ।
विस्तारस्य चतुर्थेन प्रमाणस्य विनिर्गमः ॥ ३ ॥
समं मूलस्य विस्तारमग्रे कुर्यात् तदर्धतः ।[a]
विस्तारस्य तृतीयेन तोयमार्गं तु कारयेत् ॥ ४ ॥
पिण्डिकार्धेन वा तुल्यं[b] दैर्घ्यं कुशस्य[क] कीर्तितम् ।
कुशं वा तुल्यदैर्घ्यं[5] च कृत्वा[6] सूत्रं च कारयेत्[7] ॥ ५ ॥
उच्छ्रायं पूर्ववत् कुर्याद् भागषोडशसंख्यया[ख] ।
अधस्तस्य द्विभागं तु[8] कण्ठं कुर्यात् त्रिभागकम्[9] ॥ ६ ॥
शेषा ह्ये[10]कैकशः कार्याः प्रतिष्ठा[11] निर्गतास्तथा ।
यष्टिका[12] पिण्डिका चेयं सामान्यप्रतिमासु च ॥ ७ ॥
प्रासादद्वारमानेन प्रतिमाद्वार[13]मुच्यते ।
गजव्यालकसंयुक्ता प्रभास्याः प्रतिमासु च ॥ ८ ॥
पिण्डिकासु यथाशोभं कर्तव्या सततं हरेः ।
सर्वेषामेव देवानां विष्णूक्तं मानमुच्यते[14] ॥ ९ ॥
देवीनामपि सर्वासां लक्ष्म्युक्तं मानमुच्यते ।
किंकराद्याश्च कर्तव्याः सप्तसंस्थान[15]संयुताः ॥ १० ॥
अर्धोत्थितविधाना[16] च बाहुल्यान्तास्तथा तथा ।
तथा तथोपसंलक्ष्य कुर्याद् देशिकसत्तमः ॥ ११ ॥

[3] .. र्धेन—A, B, C. * वा तुल्यं—A, B, C. [4] B, C. partially omit this line ; ... च—D, F. (a) E replaces this line by repeating 2। (b) बाहुल्यं—E. [क] देशस्य—B, C. [5] तुल्याद् दैर्घ्यं—B, D., बाहुल्यदैर्घ्यं—F., कुशबाहुल्याद् दैर्घ्यं च—E [6] ज्ञात्वा—A, D, F [7] सूत्रं प्रकल्पयेत्—A, D, F. [ख] भागशेषेण संख्यया—D F. [8] अधः पटं विभागं तु—B, C. [9] त्रिभागिकम्—C, D. [10] .. ह्स्तेकैकशः—C. [11] प्रथिष्ठा B, C. [12] पट्टिका—B, C. [13] द्रव्य—A, D. [14] Verses 8 and 9 are omitted in B, C. [15] सप्तवाताल—B ; सप्तपट्ताल—C. [16] अर्धोत्थितविधाने—B, C.

अव्यक्तस्थापनं[17] नेष्टं[18] व्यक्तायामेक[19]मण्डले (?)।
लौहजः शैलजो[20] दोष एकमूर्तौ न विद्यते ॥ १२ ॥

। ३२ ।। इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे द्वात्रिंशः पिण्डिकालक्षणपटलः । ३२ ॥

## त्रयस्त्रिंशः पटलः

श्रीभगवान् उवाच -

प्रतिष्ठापञ्चकं वक्ष्ये तन्निबोध चतुर्मुख।
परमात्मा हरिर्देवस्तच्छक्तिः श्रीरिहोदिता ॥ १ ॥
श्रीदेवी प्रकृतिः प्रोक्ता केशवः पुरुषः स्मृतः।
न विष्णुना विना देवी न हरिः पद्मया[क] विना ॥ २ ॥
अर्चा[1]मूर्तिः स्मृतः कृष्णः पिण्डिका कमलालया।
तयोर्यो विधिना योगः सा प्रतिष्ठा प्रकीर्तिता ॥ ३ ॥

... .... ....

इच्छाफलार्थिभिस्तस्मात् प्रतिष्ठा क्रियते नरैः ॥ ४ ।
आचार्यः पूर्वमेवोक्तो मूर्तिपाश्च मया तव।
येन तन्त्रेण[2] प्रारब्धा प्रतिष्ठा गुरुणा भवेत् ॥ ५ ।
तन्मन्त्र[3]पारगाः शस्ता मूर्तिपाश्छिन्नसंशयाः।
षडङ्गविदुषः सर्वे मन्त्रब्राह्मणपारगाः ॥ ६ ॥
एवंविधैर्वैष्णवैस्तु प्रतिष्ठामारभेद् गुरुः।
उत्तराशां श्रिते[4] भानौ शुक्लपक्षे सुरेश्वर ॥ ७ ॥

[17] . स्थापनी—B. C. [18] नष्टं—C. [19] व्यक्त' था मेक —B. C.; व्यक्तायामेव—F.
[20] शिलजो —B. [क] पद्मजां—D. [1] अर्च्या —A. [2] मन्त्रेन—B. [3] तत्तन्त्र -A, F.
[4] उत्तरायाश्रिते —B, C.; ...स्थिते—A.

कृष्णपक्षान्तिमत्र्यंशादृते सुरगणार्चित[5] ।
शुक्लस्याद्यं परित्यज्य प्रतिष्ठां कारयेद् बुधः ॥ ८ ॥
माघे वा फाल्गुने वापि[ख] चैत्रवैशाखयोरपि ।
ज्यैष्ठे मास्यथवाषाढे सुयोगकरणान्विते[6] ॥ ९ ॥
प्रतिपच्च द्वितीया च तृतीया पञ्चमी तथा ।
सप्तमी दशमी चैव द्वादशी च त्रयोदशी ॥ १० ॥
अष्टमी पौर्णमासी च प्रतिष्ठायां सुशोभनाः ।
गुरुः सोमो बुधः शुक्रः प्रतिष्ठायां शुभावहाः[7] ॥ ११ ॥
मेषो वृषोऽथ मिथुनः कर्कटो वृश्चिकस्तथा ।
सिंहः कन्या च सततं विज्ञेयाः शान्तिकारकाः ॥ १२ ॥
उत्तरासु तथा मूले रौद्रे पुष्येऽथ[8] शस्यते ।
वैष्णवे चानुराधे च रेवत्यां रोहिणीषु च ॥ १३ ॥
अश्विन्यामथ चित्रायां भरण्यां च पुनर्वसौ ।
प्रतिष्ठां कारयेद् विद्वान् नक्षत्रे मृगशीर्षके ॥ १४ ॥
अयने विषुवे चैव षडशीतिमुखे तथा ।
मित्रं परममित्रं च सम्पत् क्षेमं च साधकम् ॥ १५ ॥
तारापञ्चकमेतच्च प्रतिष्ठायां प्रशस्यते ।
[ चतुर्थे द्वादशे चन्द्रे चाष्टमे च विशेषतः ।
प्रतिष्ठास्थापनायां च मरणं वै विनिर्दिशेत् ॥ ]
गरं विष्टिं सकिन्तुघ्नं (?) शकुनं सचतुष्पदम्[9] ॥ १६ ॥
वर्जयेत् सर्वयत्नेन[ग] प्रतिष्ठायां सुरेश्वर ।
विष्कम्भम् अतिगण्डं च शूलं परिघमेव च ॥ १७ ॥

[5] .. नार्चिते—B, C.  [ख] माघे मासि फाल्गुने वा—A, B  [6] शुभयोगकरान्विते—B, C.
[7] शुभावहः—B, C.  [8] पुष्ये च—B, C. [Found in E only.]  [9] शकुनिं च चतुष्पदम्—B, C.  [ग] सप्रयत्नेन—D.

गण्ड* व्याघातकं चैव वैधृतिं वज्रमेव च ।
व्यतीपातं हर्षणं च योगान् एतान् विवर्जयेत्* ॥ १८ ॥
न शस्तं सग्रहे[10] नित्यं तथा वै दक्षिणायने ।
लग्ने तु सुस्थिरे कार्यं स्थिरांशे सुरसत्तम ॥ १९ ॥
कर्तुश्चोपचयोपेते मुहूर्ते शोभने[11] द्विज ।
मैत्रे ( वै ? ) विराजे सावित्रे श्वेते वा वासवे शिवे[12] ॥ २० ॥
अभिजिद्रोहिणीनां च मुहूर्ते पद्मसम्भव[13]
गान्धर्वे[14] वा स्थापयीत हरिं सुरगणार्चितम् ॥ २१ ॥
आदित्यस्य बलं लब्ध्वा लग्नं शुभनिरीक्षितम्[15] ।
चन्द्रताराबलं प्राप्य स्थापयेत् पुरुषोत्तमम् ॥ २२ ॥
.. . .... ....
सुग्रहे च सुनक्षत्रे[16] कुर्यात् तत्राधिवासनम्[17] ॥ २३ ॥
॥ ३३ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे त्रयस्त्रिंशः कालपरीक्षापटलः ॥ ३३ ॥

## चतुस्त्रिंशः पटलः

श्रीभगवान् उवाच –

प्रासादं वेष्टयित्वा तु कुर्याद् गुप्ततरं बुधः ।
कृत्वा गुप्तं ततः पश्चाद् यागमण्डपमारभेत् ॥ १ ॥

*With the names of the 'yogas' D adds the following numerical indications: विष्कम्भम्—१ ; शूलम्—९ ; परिघम्—१९ ; गण्डम्—१० ; अतिगण्डम्—६ व्याघातकम्—१३ , वैधृतिम्—८ ; वज्रम्—१५ ; व्यतिपातम्—१७ ; हर्षणम्—१४ [10] सग्रहो —C. [11] गौतमे—B. [12] शवे —C [13] पद्मसम्भवे —B, C. [14] गान्धर्वे —A [15] लग्ने शुभनिरीक्षिते —B. [16] स्वग्रहे च स्वनक्षत्रे—A. [17] कुर्यात् तु वाधिवासनम्—A.

गर्भसूत्रं तु निःसार्य[क] प्रासादस्यायतो गुरुः ।
कृत्वा भूमिं तु निशल्यां[ख] मण्डपं सूत्रयेत् ततः ॥ २ ॥
हीनस्तु मण्डपः कार्यो हीने त्वायतने सदा ।
उत्तमेषूत्तमः कार्यो मध्यमे मध्यमस्तथा ॥ ३ ॥
दशाष्टहस्तं हीनं तु मध्यं द्वादशषोडशम् ।
विंशहस्तं चतुर्विंशमुत्तमस्योत्तमं द्विज ॥ ४ ॥
चतुर्हस्तादिमानानां प्रासादानां यथाक्रमम् ।
मण्डपानष्टहस्तादि कल्पयेद् वेदवृद्धितः[ग] ॥ ५ ॥
समवृत्तं[1] चतुर्द्वारं चतुस्तोरणभूषितम् ।
विचित्रस्तम्भविन्यासं रचनारचितं[2] शुभम् ॥ ६ ॥
धूमनिर्गमनोपेतं[3] मण्डपं कारयेद् बुधः ।
स्नानार्थं कलसार्थं च स्नान[4]द्रव्यार्थमेव च ॥ ७ ॥
जलनिर्गमनोपेतमर्धेन स्नानमण्डपम् ।
ऐशान्यां कलसार्थं च[5] तस्माद् दक्षिणगोचरे ॥ ८ ॥
पूर्वस्यां मण्डपं कुर्याद्[6] यागद्रव्यार्थमायतम् ।
त्रि[7]भागेनाथवार्धेन कुर्याद् वेदीं सुशोभनाम् ॥ ९ ॥

.... .... .. ....

हस्तमात्रोच्छ्रिता कार्या मध्ये सम्यग्व्यवस्थिता ॥ १० ॥
मण्डपं मण्डयेदार्द्रशाखाभिस्तु समन्ततः ।
विमलेन वितानेन पताकाभिश्च भूषयेत् ॥ ११ ॥
दर्पणैश्चामरैर्घण्टैः स्तम्भान् वस्त्रैर्विभूषयेत् ।
कलसैर्वेदिकाभिश्च साधारैर्गडुकैस्तथा[घ] ॥ १२ ॥

[क] निःसिर्य —Var. ed. निःशार्य—E. [ख] निःसिर्य—Var. ed. [1] समसूत्रं —B, C. [ग] ...बुद्धितः —F. ; षड्ढितः—E. [2] विन्यासरचताचरितं—B, C. .. चर्तितं—F. [3] धूमस्य निर्गमोपेतां—B, C. [4] योग —B, C. [5] तु—C. [6] कार्यं—C. [7] वि—B
[घ] साधारैः कुण्डकैस्तथा —E, F.

मण्डपं भूषयित्वैवं जाह्नवीवालुकां शुभाम् ।
बाह्यदेशेषु विकिरेत् पञ्चगव्येन प्रोक्षयेत् ॥ १३ ॥
पाषण्डान् नास्तिकान् सर्वान् देवब्राह्मणदूषकान् ।
दीक्षाबहिष्कृतान् सर्वान् हेतुवादरतांस्तथा ॥ १४ ॥
निवार्य प्रारभेत् कर्म वैष्णवैर्दीक्षितैः सह ।
आहृत्य सर्वद्रव्याणि स्रुक्स्रुवौ[8] विष्टराणि च ॥ १५ ॥

.... .... .... ....

यज्ञपात्राणि सर्वाणि स्थाप्य यत्नेन देशिकः ॥ १६ ॥
श्वेतवस्त्रपरीधानः सोष्णीषश्चन्दनोक्षितः ।
अङ्गुरीयकहस्तश्च[9] सर्वालंकारभूषितः ॥ १७ ॥
आत्मानं विष्णुवत् पूज्य गन्धपुष्पादिभिर्गुरुः ।
ध्यात्वा देहं[10] विष्णुरूपं मन्त्रात्मकं ततः शुचिः[11] ॥ १८ ॥
हरिं प्रणम्य विज्ञाप्य मूर्तिपानपि पूजयेत् ।
सितैः पुष्पैर्वस्त्रयुग्मैरङ्गुरीयैरथाङ्गदैः ॥ १९ ॥
निपुणैः शिल्पिभिः सार्धं ततः कर्म समाचरेत्[12] ।
पञ्चगव्येन सन्तृप्य शोध्य कुम्भान्[13] विचक्षणः[३] ॥ २० ॥

.... .... .... ....

स्थापयेन्मूर्तिपान् पश्चात् कुण्डे कुण्डे तु देशिकः ॥ २१ ॥
चतुष्कोणं भवेत् कुण्डं पूर्वस्यां दिशि सर्वदा ।
अर्धचन्द्रं भवेद् याम्यां वारुण्यां वर्तुलं भवेत् ॥ २२ ॥
[ पद्माभमुत्तरे भागे कुण्डं स्याद् द्विजसत्तम ।
अश्वत्थोदुम्बरं चैव[14] न्यग्रोधः प्लक्ष एव च[15] ॥ २३ ॥

[8] स्रुक्स्रुवौ—A. B.; स्रुक्स्रुवं—C. D.; सुरक्षक्—F. [9] साङ्गुरीयश्च—B, C. [10] देवं—A, D. [11] शुचिं ततः—C. [12] समारभेत्—B, C. [13] कुण्डान्—B, C. क विचक्षणैः—E. [14] अश्वत्थोदुम्बरौ चैव—B, C. [15] प्लक्षमेव च—C. [ Verses 23-24 omitted in E, F. ]

तोरणार्थे तु कथिता पूर्वादिषु यथाक्रमम् ।
सुशोभनं भवेत् पूर्वे सुभद्रं दक्षिणे भवेत् ॥ २४ ॥ ]
सुकर्मा पश्चिमे भागे सुहोत्रं तु तथोत्तरे ।
....   ....   ....   .... ॥ २५ ॥
एकहस्तं खनेद् भूमौ चतुर्हस्तं तथोच्छ्रयेत् ।
द्विहस्तान्तरमन्योन्यं तोरणं संप्रकल्पयेत् ॥ २६ ॥
तिर्यक्फलकमानं स्यात् स्तम्भानामर्धमानतः ।
"स्योना पृथिवि[16]" मन्त्रेण स्थाप्याः पूज्याश्च[17] तोरणाः ॥ २७ ॥
शुक्लवस्त्रयुगच्छन्नान् दर्भपिञ्जलसंयुतान्[च] ।
पुष्पमालापरिक्षिप्तांस्तोरणान् परिकल्पयेत् ॥ २८ ॥
वृत्तं वा चतुरस्रं वा द्विषट्काष्टाङ्गुलं तु वा ।
षट्चतुर्वाङ्गुलं कार्यं[18] तोरणं निर्व्रणं समम् ॥ २९ ॥
तोरणस्तम्भमूलेषु कलसान् मङ्गलाङ्कुरान् ।
प्रदद्यादुपरिष्टात् तु[19] कुर्याच्चक्रं सुदर्शनम् ॥ ३० ॥
कलसं वर्धमानं[20] वा वसुभागेन कल्पयेत् ।
पञ्चहस्तप्रमाणं तु ध्वजं कुर्याद् विचक्षणः ॥ ३१ ॥
वैपुल्यं[छ] चास्य कुर्वीत षोडशाङ्गुल[ज]-सम्मितम् ।
सप्तहस्तोच्छ्रितं चास्य कुर्याद् दण्डं सुरोत्तम ॥ ३२ ॥
सप्तहस्तास्ततो दैर्घ्याद्[21] विस्ताराद् द्वादशाङ्गुलाः ।
द्विपञ्चहस्तदण्डेषु पताकास्तु निवेशयेत् ॥ ३३ ॥
बाह्यदेशे मण्डपस्य तोरणाभ्यन्तरे तथा ।
अष्टौ ध्वजाः स्थापनीयाः पूर्वादिक्रमयोगतः ॥ ३४ ॥

[16] श्यो ना पृथिवि—B, C.; श्यो ना पृथिवी -F. [17] पूज्यास्तु—A, D, F. [च] दर्भजलपिसंयुतान्—Var. ed. [18] षट्चतुरङ्गुलं कुर्यात्—B, C. [19] च—B, C. [20] मूर्धमानं वा—B, C. [छ] विस्तारं—E, F. [ज] द्वादशाङ्गुल—D. [21] सप्तहस्ताः ध्वजाः कार्याः—B; सप्तहस्तो ध्वजा कार्या—C.

अरुणोऽग्निनिभश्चैव कृष्णः शुक्लोऽथ पीतकः ।
रक्तवर्णस्तथा श्वेतः सर्ववर्णस्तथैव च ॥ ३५ ॥
कुमुदः कुमुदाक्षश्च[22] पुण्डरीकोऽथ[23] वामनः ।
शङ्कुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ॥ ३६ ॥
इत्येते विष्णुलोकस्य दिक्पालगणनायकाः ।
कोटिसंख्यगुणैर्युक्ताः पूजनीया यथादिशि ॥ ३७ ॥
नवेन चित्रवर्णेन वितानं कारयेच्छुभम् ।
अथवा शुक्लवर्णेन मध्ये जलजभूषितम् ॥ ३८ ॥
उत्तमाधममध्यं तु प्रमाणं चास्य कीर्त्यते ।
मण्डपस्य प्रमाणं तु ज्येष्ठं तत् स्याद् वितानकम् ॥ ३९ ॥
मध्यमं वेदिकामात्रं कनिष्ठं मण्डलस्य तु[24] ।
.... .... ... .... ॥ ४० ॥
शातकुम्भमयान् कुर्याद् राजतान् शुल्वजानथ ।
जलाढकप्रपूरांस्तु लोहजान् कारयेद् दृढान् ॥ ४१ ॥
मृन्मयान् कलसान् वापि पक्वबिम्बोपमान् शुभान् ।
अष्टाविंशाधिकशतपल[25]पूरांस्तु मृन्मयान् ॥ ४२ ॥
अवक्रान् स्फोटरहितान् कालमण्डलवर्जितान् ।
आहृत्य कलसान् वस्त्रपूततोयेन पूरयेत् ॥ ४३ ॥
सहिरण्यान् वस्त्रयुग्मबद्धकण्ठान् निवेशयेत् ।
तोरणानां[26] बहिः स्थाप्याः प्रागादिषु यथाक्रमम् ॥ ४४ ॥
वेदिकायाश्चतुष्कोणे चतुरः कलसान् न्यसेत् ।
"आजिघ्र" इति मन्त्रेण कलसान् स्थापयेद् बुधः ॥ ४५ ॥
इन्द्रादिलोकपालांस्तु कलसेषु यथाक्रमम्[27] ।
पूजयेद् गन्धपुष्पाद्यैर्मन्त्रैरावाह्य देशिकः[28] ॥ ४६ ॥

[22] कुमुदाख्यश्च—A. [23] पुण्डरीकश्च—C [24] च—B, C. [25] .शतान् जल—C. [26] तोरणाश्च—A. [27] Verse 45 and the first hemistich of verse 46 are omitted in A, D. [28] पूजयेत्—B, C.

तद् यथा—

"आयाहीन्द्र महाराजाधिराज वज्रहस्त स्वबल[29]वाहनावृत इहागच्छ इहागच्छ इह तिष्ठ इह तिष्ठ[30] पूर्वद्वारम् अभिरक्ष अभिरक्ष" —इत्यावाह्य "ॐ त्रातारमिन्द्रम्" इत्यनेनार्घ्यं दत्त्वा गन्धादिभिरर्चयेत् ॥ १ ॥

"ॐ[31] आयाहि चित्रभानो महाराजाधिराज शक्तिहस्त स्वबलवाहनावृत इहागच्छ इहागच्छ तिष्ठ[32] आग्नेयीं दिशम् अभिरक्ष रक्ष"—इत्यावाह्य "ॐ अग्निर्मूर्धा दिव" इत्यनेन अर्घ्यं दत्वा गन्धादिभिरभ्यर्चयेत्[33] ॥ २ ॥

"ॐ आयाहि यम* महाराजाधिराज स्वबलवाहनावृत[34] दण्डहस्त रक्तान्तायतलोचन इहागच्छ इहागच्छ तिष्ठ तिष्ठ[35] दक्षिण-द्वारमभिरक्ष रक्ष"—इत्यावाह्य "ॐ वैवस्वतं सङ्गमनम्" इत्यनेनार्घ्यं दत्त्वा गन्धादिभिरभ्यर्चयेत् ॥ ३ ॥

"ॐ आयाहि निरृते[36] महाराजाधिराज स्वबलवाहनावृत खड्गहस्त महाबल[37] इहागच्छ[38] तिष्ठ तिष्ठ नैरृतीं दिशम् अभिरक्ष रक्ष"—इत्यावाह्य[39] "ॐ एष ते निरृते[40]" इत्यनेन अर्घ्यं दत्वा गन्धादिभिरभ्यर्चयेत् ॥ ४ ॥

[29] सुबल—B, C. [30] इह तिष्ठ इह तिष्ठ—A, B.; तिष्ठ तिष्ठ—C. D. [31] ॐ omitted in B. [32] तिष्ठ तिष्ठ is expected here. [33] ...रर्चयेत –C. * आयाहीन्द्र—F. [34] स्वबल...वृत—omitted in C. [35] तिष्ठ तिष्ठ —omitted in C. [36] नैरृते –C, D. [37] महाबल—omitted in C. [38] इहागच्छ इहागच्छ—is expected here which is found in D. [39] B omits the portion beginning from ॐ आयाहि यम...up-to इत्यावाह्य। [40] नैरृत—C.

"ॐ आयाहि वरुण महाराजाधिराज पाशहस्त स्वबलवाहनावृत इहागच्छ इहागच्छ तिष्ठ तिष्ठ पश्चिमद्वारम् (ऊर्ध्वां दिशम्)[41] अभिरक्ष रक्ष" इत्यावाह्य "ॐ उरुं हि राजा वरुणश्चकार" इत्यनेनार्घ्यं दत्त्वा गन्धादिभिरभ्यर्चयेत् ॥ ५ ॥

"ॐ आयाहि पवन[42] महाराजाधिराज ध्वजहस्त स्वबलवाहनावृत इहागच्छ इहागच्छ तिष्ठ तिष्ठ वायवीं दिशमभिरक्ष रक्ष"—इत्यावाह्य "ॐ वात आ वातु भेषजम्" इत्यनेनार्घ्यं दत्त्वा गन्धादिभिरभ्यर्चयेत् । ६ ॥

"ॐ आयाहि सोम महाराजाधिराज शङ्खहस्त स्वबल-वाहनावृत इहागच्छ इहागच्छ तिष्ठ तिष्ठ उत्तरद्वारम् अभिरक्ष रक्ष" इत्यावाह्य "ॐ सोमं राजानम्" इत्यनेन अर्घ्यं दत्त्वा गन्धादिभिरभ्यर्चयेत् ॥ ७ ॥

"ॐ आयाहीशान महाराजाधिराज शूलहस्त स्वबल-वाहनावृत इहागच्छ इहागच्छ तिष्ठ तिष्ठ ऐशानीं दिशम् अभिरक्ष रक्ष"—इत्यावाह्य "ॐ ईशानमस्य" इत्यनेनार्घ्यं दत्त्वा गन्धादिभिरभ्यर्चयेत् ॥ ८ ॥

"ॐ आयाहि चतुर्मुख सर्वलोकाधिपते स्रुकस्रुवहस्त[43] स्वबल-वाहनावृत इहागच्छ इहागच्छ तिष्ठ तिष्ठ ऊर्ध्वां दिशमभिरक्ष रक्ष"—इत्यावाह्य "ॐ हिरण्यगर्भः समवर्तताग्र" इत्यनेनार्घ्यं दत्त्वा इन्द्रेशानयोर्मध्ये[१] गन्धादिभिरर्चयेत् ॥ ९ ॥

[41] B omits ऊर्ध्वां दिशम्। [42] वायो—B, C. [43] स्रुकस्रुवह—omitted in B.
[१] ऐशान्यां—A, B.

"ॐ आयाह्यनन्त महाराजाधिराज स्वबलवाहनावृत लाङ्गल-
हस्त इहागच्छ इहागच्छ तिष्ठ तिष्ठ अधोदिशमभिरक्ष रक्ष" —
इत्यावाह्य "ॐ नमोऽस्तु सर्पेभ्य" इत्यनेनार्घ्यं दत्त्वा
( निऋ्ऱति-वरुणयोर्मध्ये )* गन्धादिभिरर्चयेत् ॥ १० ॥

एवमभ्यर्च्य लोकेशांस्ततो भूमिपरिग्रहम् ॥
कुर्वीत वक्ष्यमाणं तत् साम्प्रतं शृणु सुव्रत[44] ॥ ४७ ॥

॥ ३४ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे चतुस्त्रिंशः दिकपाल[45]-यागपटलः ॥ ३४ ॥

## पञ्चत्रिंशः पटलः

श्रीभगवान् उवाच—

श्रीहीनाहत देवेश वासुदेवेन चार्चयेत् ।
क्षिपेश्च नारसिंहेन पातालमुषलेन च[1] ॥ १ ॥
सिद्धार्थकान् क्षिपेद् ध्यायन्[2] सिंहमन्त्रेण मन्त्रितान् ।
रक्षोघ्नान् पञ्चगव्येन प्रोक्षयेद् भूमिमादरात् ॥ २ ॥
ततस्ताम्रमयं कुम्भं मृन्मयं वा नवं दृढम् ।
जलपूर्णं स्थापयित्वा सरत्नं करकायुतम्[3] ॥ ३ ॥
ऐशान्यामर्चयेत् तस्मिन् साङ्गं गन्धादिना हरिम् ।
अस्त्रमन्त्रेण करकां शतधारां समर्चयेत[क] ॥ ४ ॥

*A note in D adds here निर्ऋतिवरुणयोर्मध्ये । [44] सत्तम—B, C. सुव्रते—E, F.
[45] दिकपाल-लक्षण—B. [1] तु—A. [2] नित्यं—B, C. [3] सरत्नकरकायुतम्—B, C.
...करकान्वितम्—F. [क] तमर्चयेत्—Var. ed. ; शतधारांस्तु मन्त्रयेत्—F.

तद्धाराच्छिन्नया सिञ्चेन्मण्डपं तं[4] प्रदक्षिणम् ।
कुम्भं तं पृष्ठतो नीत्वा कुम्भमन्त्रेण देशिकः ॥ ५ ॥
व्रीहीन् संहृत्य सर्वांस्तु कुम्भं तत्रोपरि न्यसेत् ।
पुनः संपूजयेद् विष्णुं कलसेषु समाहितः ॥ ६ ॥
वस्त्रयुग्मेन कलसमेकेन करकां बुधः ।
छादयित्वा ततो गृह्य करणीं मण्डलं लिखेत्[ख] ॥ ७ ॥
चतुरस्रं चतुर्द्वारं चक्राब्जं षोडशारकम् ।
पञ्चवर्णेण चूर्णेन द्वादशारमथापि वा[5] ॥ ८ ॥
वेद्यामेवं लिखित्वा च मण्डपे पूर्वदक्षिणे ।
चतुर्हस्तं चतुष्कोणं मध्ये पङ्कजभूषितम् ॥ ९ ॥
चतुर्द्वारं तु चूर्णेन स्वस्तिकं मण्डलं लिखेद् ।
तदूर्ध्वं[6] न्यस्य पर्यङ्कं कुशान् संस्तारयेत्[7] ततः ॥ १० ॥
"( ॐ )[8] योगे योगे"ति मन्त्रेण गन्धतोयेन प्रोक्षयेत् ।
तूलिकां विन्यसेत् तत्र दिव्यपट्टांशुकान्विताम् ॥ ११ ॥
उपधानद्वयं दत्त्वा पार्श्वे गण्डूकमेव च ।
कपोलधारणं दत्त्वा कुर्यादूर्ध्वं वितानकम् ॥ १२ ॥
पुष्पमालापरिक्षिप्तं मुक्ताहारोपशोभितम् ।
कुर्यात् पुष्पगृहं हृद्यं[9] मलयागुरुधूपितम् ॥ १३ ।
विद्याधिपास्तु[10] संपूज्याः शक्त्या[11] दिक्षु विदिक्षु च ।
विष्णुर्मधुलिहा चैव तथैव च त्रिविक्रमः ॥ १४ ॥
वामनश्चापि दिक्ष्वेते पूर्वाद्यासु व्यवस्थिताः ।
श्रीधरश्च हृषीकेशः पद्मनाभस्तथैव च ॥ १५ ॥

[4] तु—C. [ख] नयेत्—D. [5] वा *is omitted in* A. B. [6] ततोऽर्धं—A.; ततोऽर्धं—D. तत्रोर्ध्वं—F. [7] संभारयेत्—A. [8] ॐ is found in C only. [9] पुष्प गृहं कृत्यं—C. [10] विद्याधिपस्तु—C. [11] शय्यायां—C.; शय्यायां दिग्विदिक्षु च—F.

दामोदरश्च संपूज्या आग्नेयादि-व्यवस्थिताः ।
एवमर्च्य ततः पश्चात् ऐशान्यां स्नानमण्डपे ॥ १६ ॥
चतुःस्तम्भयुते रम्ये तन्मध्ये वेदिका शुभा ।
चतुरस्रा चतुर्दिक्षु जलनिर्गमनान्विता[12] ॥ १७ ॥
क्षीरिवृक्षोद्भवं पीठं मध्ये तस्यां निवेशयेत् ।
स्नानद्रव्याणि सर्वाणि समानीय विचक्षणः ॥ १८ ॥
निक्षिप्य स्नानकुम्भेषु कुम्भांस्तानधिवासयेत् ।
रत्नानि च चतुर्दिक्षु सिद्धद्रव्यान्विताः शुभाः ॥ १६ ॥
कलसाः स्थापनीयास्तु अभिषेकार्थमादरात् ।
वटोदुम्बरकाश्वत्थ[13]-चम्पकाशोकश्रीद्रुमा[14] ॥ २० ॥
पालाशार्जुनप्लक्षाश्च[15] कदम्बबकुलाम्रजान् ।
पल्लवांस्तु[16] समानीय पूर्वकुम्भे विनिक्षिपेत् ॥ २१ ॥
पद्मकं रोचनां दूर्वां दर्भपिञ्जलमेव च ।
जातीपुष्पं कुन्दपुष्पं चन्दनं रक्तचन्दनम् ॥ २२ ॥
सिद्धार्थं तगरं चैव बञ्जुलं[17] दक्षिणे न्यसेत् ।
सुवर्णं रजतं चैव कूलद्वयमृदं तथा ॥ २३ ॥
नद्याः समुद्रगामिन्या विशेषाज् जाह्नवीमृदम्[18] ।
गोमयं च यवान् शालीन् तिलांश्च पश्चिमे[19] न्यसेत् ॥ २४ ॥
विष्णुपर्णीं श्यामलतां भृङ्गराजं शतावरीम् ।
गुडूचीं सहदेवां च विन्यसेदुत्तरे घटे[20] ॥ २५ ॥
फलान्युदकयुक्तानि आग्नेय्यां विन्यसेद् घटे ।
पञ्चगव्यं तु नैरृत्यां कुम्भे कृत्याभिमन्त्रयेत्[21] ॥ २६ ॥

[12] ...सान्विता—C. [13] ...श्वत्थान्—C.; ...श्वत्थात्—A, B. [14] ...शोकजद्रुमान्—C.; ..शोकचद्रुमात्—A, B. [15] ...प्लक्षांस्तु—C, F. [16] पल्लवास्तु—C. [17] तण्डुलं—C. [18] जलम्—A. [19] ..व परे—A, B.; ...श्चैवापरे—C. [20] विन्यसेच्च महौषधिम्—C. [21] कृत्वाभिमन्त्रितः—B, C.; A f. n.

वटाश्वत्थपलाशानां बिल्वस्योदुम्बरस्य[22] च ।
कषायोदकसंयुक्तं वायव्यां कलसं न्यसेत् ॥ २७ ॥
कुमारीममृतां चैव शतमूलीं शतावरीम् [23] ।
सहदेवीं[24] वचां सिंहीं बलां व्याघ्रीं सलक्षणाम्[ग] ॥ २८ ॥
ऐशान्यामपरे कुम्भे मङ्गलाख्यां[25] निवेशयेत् ।
वल्मीकमृत्तिकां सप्तस्थानोत्थामपरे न्यसेत् ॥ २९ ॥
जाह्नवीवालुकां तोयं विन्यसेदपरे घटे ।
वराहवृषनागेन्द्रविषाणोद्धृतमृत्तिकाम् ॥ ३० ॥
कूलद्वयमृदं नद्या विन्यसेदपरे घटे ।
मृत्तिकां पद्ममूलस्य कुशस्य त्वपरे घटे ॥ ३१ ॥
तीर्थपर्वतमृद्भिस्तु युक्तमप्यपरे न्यसेत् [26] ।
नागकेशरपुष्पं च काश्मीरमपरे न्यसेत् ॥ ३२ ॥
चन्दनागुरुकर्पूरैः पूर्यं चैवापरं[27] न्यसेत् ।
वैदूर्यं विद्रुमं मुक्तां स्फटिकं वज्रमेव च ॥ ३३
एतान्येकत्र निःक्षिप्य स्थापयेद् देवसत्तम
नदीनदतडागानां सलिलैरपरे[28] न्यसेत् ॥ ३४ ॥
एकाशीतिपदे चान्यान् मण्डपे कलसान् न्यसेत् ।
पूरितान गन्धतोयेन धान्यस्थान् तांस्तु मन्त्रयेत् ॥ ३५ ॥
श्रीसूक्तेन समस्तेन सर्वान् एव सकृत् सकृत् ।
कलसानधिवास्यैवमर्घ्यादीन् विनिवेशयेत् ॥ ३६ ।
यवं सिद्धार्थकं गन्धं कुशाग्रं चाक्षतं तथा ।
तिलान् फलं तथा पुष्पमर्घ्यार्थं पूर्वतो न्यसेत् ॥ ३७ ।

[22] ..स्योडुम्बरस्य—B, C. [23] सहावरीम्—A. [24] सहदेवां—B, C. [ग] व्याघ्रीमलक्षणाम्—var. ed. [25] मङ्गलाख्यं—B C. [26] घटे—A. [27] पूर्यं च वा परे—C. पूर्यं चैवापरे –A, B. [28] —रपरं—B, C.

पद्मं श्यामलतां दूर्वां विष्णुपर्णीं कुशांस्तथा ।
पाद्यार्थं दक्षिणे भागे स्थापयेद् देशिकोत्तमः ॥ ३८ ॥
स्थापयेत् पश्चिमे भागे मधुपर्कं सुसंवृतम्[29] ।
कक्कोलकं लवङ्गं च तथा जातीफलं शुभम् ॥ ३९ ॥
उत्तरे स्थापयेद् भागे द्रव्यमाचमनाय च[30] ।
आग्नेय्यां स्थापयेद् पात्रं पूर्णं दूर्वाक्षतैर्बुधः ॥ ४० ॥
नीराजनार्थं देवेश देवदेवस्य सर्वदा ।
नैरृत्यामुदकं* गन्धयुक्तं स्नानाय विन्यसेद् ॥ ४१ ॥
उद्वर्तनार्थं[31] वायव्यां गन्धपिष्टं निवेशयेत् ।
न्यसेदामलकं पात्रे मुरामांसीयुतं शुभम्[32] ॥ ४२ ॥
सहदेवीं सदा भद्रां कुशाग्रान् रजनीं तथा ।
ऐशान्यां विन्यसेत् पात्रे शिरीषं सूर्यवर्तिनीम्[33] ॥ ४३ ॥
निर्मञ्छनाय देवस्य स्थापकः सुसमाहितः ।[34]
अष्टौ दिक्षु न्यसेद् विद्वान् धातु[35]-यष्टिप्रदीपकान् ॥ ४४ ॥
शङ्खं चक्रं च श्रीवत्सं कौस्तुभं[36] पङ्कजादिकम् ।
हेमादिपात्रे कृत्वा तु गोमयेनाथ पत्रकैः[37] ॥ ४५ ॥
नीराजनार्थं[38] देवस्य तथा वै पुष्पजातयः ।
स्थापनीयास्तथा चान्ये मङ्गल्याः स्नानचोदिताः ॥ ४६ ॥

॥ ३५ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे पञ्चत्रिंशः कलशाधिवासनपटलः ॥ ३५ ॥

[29] सुसम्मितम्—B, C. [30] तु—A, D.; द्रव्यमाचमनीयकम्—F. *पिष्टकं—F. [31] उद्वर्तनाय—A. [32] तथा—B, C. [33] .. वर्तिनम्—C. [34] This line is omitted in B, C. [35] लौह—C, लोह—D, F. [36] कलशं—C. [37] वल्कलैः—A, B.; वाङ्कैः—D, F. [38] नीराजनाय—A, C.

## षट्त्रिंशः पटलः

श्रीभगवान् उवाच—

अतः संजनयेद्[1] वह्निं वैष्णवं विधिना गुरुः।
ऐशान्यां गुरुकुण्डे तु प्राङ्मुखोदङ्मुखोऽपि वा ॥ १ ॥
तत्रैव होमयेद् विष्णुगायत्र्या[2] घृतमादरात्।
अष्टोत्तरशतं हुत्वा सम्पातविधिना सुधीः ॥ २ ॥
सम्पाताज्येन कलसान् प्रोक्ष्य देशिकसत्तमः।
लिप्तायां कारुशालायामुपतिष्ठेत संयतः ॥ ३ ॥
ब्राह्मणैर्वैष्णवैः सार्धं मूर्तिपैः शिल्पिभिः सह।
महता ब्रह्मघोषेण सहायैर्वलवत्तरैः ॥ ४ ॥
काहला[3]शङ्खशब्दैश्च भेरीमुरजनिःस्वनैः।
वीणावेणुस्वरैर्हृद्यैर्दिव्यगन्धर्वस्वनैस्तथा[4] ॥ ५ ॥
आचार्यः प्राङ्मुखो भूत्वा कुर्यात् कौतुकबन्धनम्।
"विष्णवे शिपिविष्टे"[5]ति गौरसिद्धार्थकेन तु ॥ ६ ॥
ऊर्णामयेन सूत्रेण निम्ब[6]दूर्वान्वितेन च।
दुकूलवस्त्रे[7]र्बद्ध्वा तु दक्षिणे बन्धयेत् करे ॥ ७ ॥
देशिकस्यापि कर्तव्यं करे कौतुकबन्धनम्।
ततो विकल्प्य वेदास्त्रं[8] तण्डुलैः पञ्चरङ्गकैः* ॥ ८ ॥
तन्मध्ये प्रतिमां स्थाप्य स्नाप्य चैव[9] यथाविधि।
वस्त्रयुग्मेन संछाद्य[10] पूज्य गन्धादिना तु ताम्[11] ॥ ९ ॥
चामरैस्तालवृन्तैश्च वीजयेन्मङ्गलान्विताम्।[12]
शिबिकायां[a] निवेश्याथ प्रतिमां संस्तवेत् ततः ॥ १० ॥

[1] संज्वलयेद् —B, C. [2] विष्णुं गायत्र्या —C. [3] काहाला —A. [4] हृद्यैस्तिथ्यैर्गगीतस्वनैः —B, C. [5] शिपिवेष्टेति A, B; शिविपिष्टेति —C. [6] निम्बं—B, C. [7] .. वस्त्रैः—B, C. [8] देवास्त्रं—A, D. *पञ्चवर्णकैः—F. [9] देव —A. [10] संस्थाप्य—A.; संहृत्य —B.; संस्थाप्य—C. [11] तथा—B, C. [12] This line is omitted in B, C. [a] एडकायां—F.

"ॐ[13] नमस्तेऽर्च्ये सुरेशानि प्रणीते विश्वकर्मणा ।
प्रभाविताशेषजगद्धात्रि तुभ्यं नमो नमः ॥ ११ ॥
त्वयि संपूजयामीशे नारायणमनामयम् ।
रहिता शिल्पदोषैस्त्वमृद्धियुक्ता सदा भव" ॥ १२ ॥
एवं विज्ञाप्य प्रतिमां नयेत् तां स्नानमण्डपम् ।
ध्रियमाणवितानेन ब्रह्मघोषेण तां बुधः ॥ १३ ॥
भद्रपीठे समारोप्य "भद्रं कर्णे"ति कीर्तयेत् ।
स्नापयेच्छुद्धतोयेन शुद्धवस्त्या तु देशिकः ॥ १४ ॥
स्नापिता गन्धतोयेन शिल्पदोषैर्विमुच्यते[14] ।
मन्त्रैर्गन्धादिनाभ्यर्च्य छादयेत् शुक्लवाससा ॥ १५ ॥
पूजयित्वा तु प्रतिमां शिल्पिनं तोषयेत् ततः ।
गन्धपुष्पादिभिर्विप्रं तोषयेत् कटकादिभिः ॥ १६ ॥
सर्वेऽथ कर्मिणस्तोष्या[15]स्तस्मिन् काले पृथक् पृथक् ।
क्षमापयीत तान् सर्वान् प्रियप्रश्नेन सर्वथा ॥ १७ ॥
यजमानस्ततो भक्त्या देशिकं परितोषयेत् ।
कांस्यदोहां[16] वस्त्रकण्ठां ताम्रपृष्ठां पयस्विनीम् ॥ १८ ॥
रौप्याङ्घ्रीं स्वर्णश‍ृङ्गां तां[17] सुशीलां तरुणीं शुभाम् ।
प्रणम्य विधिना धेनुं दद्याद् वाग्भिः क्षमापयेत् ॥ १९ ॥
अवधार्य जगच्छान्तिं नेत्रे चोन्मीलयेद् बुधः ।
"चित्रं देवे" ति मन्त्रेण ज्योतिर्देवस्य चोत्किरेत् ॥ २० ॥
"अग्निर्ज्योती" ति मन्त्रेण ज्ञात्वा दृष्टिं प्रकल्पयेत् ।
दृष्टिभेदांस्तु सकलान् वर्णयिष्ये तवोपरि ॥ २१ ॥
ततः शुक्लानि पुष्पाणि घृतं[18] सिद्धार्थकं तथा ।
दूर्वां कुशाग्रं देवस्य दद्याच्छिरसि* देशिकः ॥ २२ ॥

[13] ॐ omitted in A. [14] प्रमुच्यते—B, C. [15] तस्या—B, C. [16] कांसदेहां—B, C. [17] च—B, C. [18] घृत—A. * ···च्छिराणि—var. ed.

पठन् रक्षोहणं सर्वं[19]मन्त्रमाथर्वणं तथा ।
रौप्यं भाजनमादाय मधुरत्रयसंयुतम् ।। २३ ।।
"मधु वाते" ति मन्त्रेण मन्त्रयित्वाष्टधा पुनः ।
शलाकया सुवर्णस्य नेत्रे चाभ्यञ्जयेद् गुरुः ।। २४ ।।
हिरण्यगर्भमन्त्रेण "इमं मे" ति च[20] कीर्तयन् ।
घृतेनाभ्यञ्जयेत् पश्चात् पठन् घृतवतीं बुधः ॥ २५ ।।
मसूरचूर्णेनोद्वर्त्य "अतो देवे"[21] ति कीर्तयन् ।
क्षालयेदुष्णतोयेन "सप्त तेऽग्ने" ति देशिकः ।। २६ ।।
चन्दनेनानुलिम्पेच्च "द्रुपदादिव" इत्यृचा ।
नादेयैः स्नापयेत्[22] तोयै "रापो हि ष्ठे" ति देशिकः ।। २७ ।।
स्नापयेद्[23] रत्नतोयेन पावमानीभिरेव च ।
"समुद्रं गच्छ" मन्त्रेण स्नपयेच् चन्दनोदकैः ।। २८ ।।
नागकेशरतोयेन "श्रीश्च ते" त्वभिषेचयेत् ।[24]
तीर्थमृत्कलसेनाथ "शन्नो देवी" ति सेचयेत्[25] ।। २९ ।।
गायत्र्या गन्ध[26]तोयेन पञ्चमृत्तिकया ततः ।
"हिरण्यवर्णाः शुचय" इति मन्त्रेण सेचयेत् ।। ३० ।।
"इमं मे" ति च मन्त्रेण स्नपयेत्[27] सिकताजलैः ।
वल्मीकत्तोयेन हरिं "तद्विष्णो" रिति स्नापयेत्[28] ।। ३१ ।।
"या ओषधी" ति मन्त्रेण स्नानमोषधिमङ्गलम्[29] ।
"यज्ञाय[30] यज्ञे" ति मन्त्रेण दद्यात् काषाय[31]पञ्चकम्[32] ।। ३२ ।।
"पयः पृथिव्या" मन्त्रेण पञ्चगव्येन सेचयेत् ।
"याः फलिनी" रिति* हरिं फलतोयेन सेचयेत्[33] ।। ३३ ।।

[19] सर्वं—B. [20] इमं मे इति च—B. [21] नोद्वर्तंदतो देवेति—A. [22] स्नपयेत्—A. [23] स्नपयेत् A. [24] B, C, omit this line. [25] This line is omitted in A. [26] पद्म—A. [27] स्नापयेत्—C. [28] मन्त्रयेत् –B ; सेचयेत्—C. [29] मङ्गलौषधिवारिणा—B, C. [30] यज्ञा—C. [31] कषाय—C. [32] पङ्कजम्—A, B. ; काषायजं जलम् -D. *याः फलिनीति—F. [33] B omits this line.

"विश्वतश्चक्षु" रित्युक्त्वा उदकुम्भेन सेचयेत् ।
"सोमं राजान" इत्येवं पूर्वकुम्भेन सेचयेत् ॥ ३४ ॥
"विष्णो विराट" मन्त्रेण दक्षिणेनाभिषेचयेत् ।[34]
"हंसः शुचि" रित्येवं पश्चिमेनाभिषेचयेत्[35] । ३५ ॥*
"मूर्धानं दिव" मन्त्रेण कुर्यादुद्वर्तनं हरेः ।
धात्रीफलं मुरामांसीयुतं शिरसि दापयेत् ॥ ३६ ॥
"मा नस्तोके"ति मन्त्रेण ततो गन्धोदकैः पुनः ।
"गन्ध द्वारे"ति मन्त्रेण ततः स्नानं समाचरेत् ॥ ३७ ॥
एकाशीतिपदन्यस्तैर्घटैर्मलयभूषितैः ।
"इदमापे"ति मन्त्रेण सर्वैरेवाभिषेचयेत् ॥ ३८ ॥
आवाहयेत् ततो विष्णुं शुद्धस्फटिकसन्निभम् ।
"एह्येहि भगवन् विष्णो लोकानुग्रहकारक ॥ ३६ ॥
यज्ञभागं गृहाणेमं वासुदेव नमो नमः ।"
अनेनावाह्य देवेशं कुर्यात् कौतुकमोचनम् ॥ ४० ॥
"मुञ्चामि त्वे"[36]ति मन्त्रेण देशिकस्यापि मोचयेत् ।
"हिरण्मये"[37]ति मन्त्रेण चार्घ्यं देवाय दापयेत् । ४१ ।
"अतो देवे"ति सूक्तेन पाद्यं कृष्णाय मन्त्रितम् ।
"मधु वाते"ति मन्त्रेण मधुपर्कं निवेदयेत् ॥ ४२ ॥

[34] This and the preceding lines are omitted in AB. [35] A omits this line, इषः स्त्रविरोत्येवं पश्चिमेन -B, C.

*D. replaces verses 34 & 35 by the following :—

"सोमो राजे"ति मन्त्रेण महौषधिजलेन च ।
"वरुणस्ये"ति मन्त्रेण स्नपयेज् जाह्नवीजलैः ॥ ३४ ॥
"समुद्रं गच्छ" मन्त्रेण जातीपुष्पोदकेन च ।
"आपो हि ष्ठे"ति मन्त्रेण स्नपयेत् पल्वलोदकैः ॥ ३५ ॥

[36] मुञ्चमित्विति—B, C. [37] हिरण्मयेन—C.

"मयि गृह्णामि"[38] मन्त्रेण दद्यादाचमनं बुधः।
"अक्षन्नमी"ति मन्त्रेण[*] किरेद् दूर्वाक्षतं बुधः॥ ४३ ॥
निर्मञ्छनं ततः कुर्याद् "काण्डात् काण्डे"ति देशिकः।
गन्धं "गन्धवती"त्येवम् "उन्नयामी"ति माल्यकम्। ४४ ॥
"इदं विष्ण्व"ति मन्त्रेण दद्यात् यज्ञोपवीतकम्।
"बृहस्पते"ति मन्त्रेण वस्त्रयुग्मं प्रदापयेत्॥ ४५ ॥
"वेदाहमेतं पुरुषम्" उत्तरीयं निवेदयेत्।
सकलीकरणं कुर्यात् पठन्नथ महाव्रतम्[40]॥ ४६ ॥
"ओषधयः संवदन्ते" पुष्पप्रकिरणं[41] ततः।
"धूरसी"ति पठन् भक्त्या धूपं दद्यात् सगुग्गुलम्[42]॥ ४७ ॥
"विभ्राडि"ति च सूक्तेन अञ्जनं तु[43] प्रदापयेत्।
"मुञ्चन्ती"[44]ति मन्त्रेण रोचना[45]तिलकं तथा॥ ४८ ॥
दद्यात् पुष्पाणि[46] माल्यानि "दीर्घायुष्टे"ति मन्त्रवित्।
"इन्द्र शुद्धे"ति[47] मन्त्रेण श्वेतं छत्रं प्रदापयेत्॥ ४९ ॥
आदर्शं तु[ख] विराजेन विकर्णेन तु चामरम्।
रथन्तरेणाभरणं व्यजनं वायुदैवतैः[ग]॥ ५० ॥
"मुञ्चामि त्वे"ति सूक्तेन पुष्पमालार्चनं ततः।
ततः स्तुवीत गोविन्दं मन्त्रैर्वेदादिभिर्विभुम्॥ ५१ ॥
तथा पुरुषसूक्तेन बृहत्साम्ना सुरोत्तमम्
"शशिकर्णा"ति नवभिः सूक्तैः सुरगणार्चितम्॥ ५२ ॥

[38] मयि गृह्णाति—A, B.; मयि ग्रथ्नाति—F. [*] अक्षन्नवीमदन्तेति -F.; अक्षन्न-वीमदन्तेति—E. [39] इदं विष्णुरिति—C. [40] पठन्नुत—A.; पठन्नत्र मधुव्रतम्—F. [41] 'प्रकरणं—B, C; पुष्पकरणं—D; '''समम(त्र)दन्तेति—Var. ed. [42] '''गुग्गुलम्—B, C. [43] प्रदीपस्तु—B, C. [44] दुञ्जन्तीति—A. [45] रोचनां—B. [46] पौष्पाणि—B, C. [47] इन्द्रशक्त्रेति—B; इन्द्रशूद्र—F; इन्द्रसूद्र ति—E [ख] आदर्शांश्च—Var. ed. [ग] वासुदैवतम्—F.

श्रायन्तीयेन[48] च स्तूयाद् गुह्योपनिषदैस्ततः ।
सर्वमेतत् समं कुर्याद् पिण्डिकायामपि द्विज ॥ ५३ ॥
देवस्योत्थानसमये सौपर्णं[घ] सर्वमुच्चरेत् ।
"उत्तिष्ठे"ति समुत्थाप्य कुर्याद् ब्रह्मरथे शुभे ॥ ५४ ॥
शाकुलेन तु सूक्तेन मण्डपे सन्निधापयेत् ।
पुष्पोपशोभिते स्थाने चन्द्रातपविभूषिते ॥ ५५ ॥
मुक्ताहारैर्लम्बमाने दीपमालो[49]पशोभिते ।
भक्ष्यभोज्यैरनेकैश्च सान्द्र[50]पल्लवशोभिते ॥ ५६ ॥
दिव्यपर्यङ्कन्यस्तायां तूलिकायां सुरोत्तम ।
अतो दे[व]े[51]ति सूक्तेन शय्यायां स्थापयेद्धरिम् ॥ ५७ ॥
तथाविधेऽपरे स्थाने पिण्डिकां सन्निवेशयेत् ।
श्रायन्तीयेन सूक्तेन श्रीसूक्तेन निवेशयेत्[52] ॥ ५८ ॥
[ सकलीकरणं कुर्याद् विष्णोरुरसि "त्रिष्वि" ति ।
दर्शयेच्च ततो भक्त्या हिरण्य[*]मङ्गलाष्टकम् ॥ ५९ ॥
मृगराजं वृषं नागं व्यजनं कलसं तथा ।
वैजयन्तीं तथा भेरीं दीपमित्यष्टमङ्गलम् ॥ ६० ॥
रौप्यजं वा सर्वमेतमश्वसूक्तेन दापयेत् ।
उख्या[a]पिधानकं पात्रं सिञ्चिकां[b] दर्विकां तथा ॥ ६१ ॥
मुषलोदुखले चैव शिलां संमार्जनीं तथा
तथा भोजनभाण्डानि गृहोपकरणानि च ॥ ६२ ॥
पाददेशे तु वै दद्यात् "त्रिपादम्ये" ति साधकः ।
"यज्ञेन" इति मन्त्रेण शिरोदेशे निवेशयेत्[53] ॥ ६३ ॥ ]

[48] श्रीयन्तीयन—B. C. ; शान्तातोयेन —A. ; शन्तोतीयेन —D. F. ; शन्तोतीये च —E. [घ] सौवर्णं F. [49] दीपमाल्यो —B. C. [50] पात्र—C. [51] अतो देति—A. [52] This line is omitted in B. [*] हैरण्य—E, F. (a) भक्ष्यं—F. (b) मञ्चिकां—E. [53] निवेश्येत्—C.
[ ] Verses 59, 60, 61, 62 and 63 are omitted in A, D.

मित्राख्यं[54] कलसं रत्नगर्भं वस्त्रयुगान्वितम्[55]।
खण्डखाद्यैरनेकैश्च पूरयित्वा समन्ततः॥ ६४॥
एष साधारणः प्रोक्तः स्नपनस्य विधिर्मया।
य एवं[56] विधिवत् कुर्यात् तस्य पुण्यफलं शृणु॥ ६५॥
यावन्ति जलबिन्दूनि मद्गात्रे विनिवेशयेत्।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥ ६६॥
॥ ३६॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे षट्त्रिंशः स्नपन*पटलः॥ ३६॥

## सप्तत्रिंशः पटलः

श्रीभगवान् उवाच

अतःपरं प्रवक्ष्यामि अधिवासननिर्णयम्।
येन वै कृतमात्रेण सान्निध्यं मम जायते॥ १॥
सर्वज्ञं सर्वगं ध्यात्वा आत्मानं पुरुषोत्तमम्।
ॐकारेण समायोज्य चिच्छक्तिमभिमानिनीम्। २।
निःसार्यात्मैकतां कृत्वा तस्मिन्[1] गर्भे[2]गते विभौ।
शोषयेन्मरुता पृथ्वीं वह्निबीजेन दीपयेत्॥ ३॥
संहरेद् वायुना चाग्निं वायुमाकाशतां नयेत्।
अधिभूताधिदैवैस्तु साध्यात्मै[3]र्विषयैः सह॥ ४॥
तन्मात्रमात्रकान् कृत्वा संहरेत् तान् क्रमाद् बुधः।
आकाशं मनसा कुर्य मनोऽहङ्करणे कुरु॥ ५॥

[54] निद्राख्यं A, F. [55] कुशान्वितम् —A. [56] एनं—A. * ...स्नानपटलं D, F.
[1] अस्मिन्—B, C. [2] सर्वे B, C. [3] साध्यात्मे—A.

अहंकारं च महति तं चाप्यव्याकृते[क] नयेत् ।
शान्तेऽनन्ते निष्प्रपञ्चे निर्मलं ज्ञानविग्रहम् ॥ ६ ॥
ध्यायेत् तत् परमानन्दे[4] शुद्धे बुद्धेऽमलेऽव्यये ।
लीनमव्याकृतं यत्र तत्संस्थं यत्स्वरूपकम् ॥ ७ ॥
परमं ब्रह्मणः शक्तिं तं विद्धि परमेष्ठिनम् ।
वासुदेवः स विज्ञेयो ज्ञानदेहो मनीषिभिः ॥ ८ ॥
स तामव्याकृतिं[5] मायामवष्टभ्य सिसृक्षया ।
शब्दात् स्वमूर्ति[6]मसृजन् स्पर्शाख्यां पौरुषीं ततः ॥ ९ ॥
संकर्षणः स विज्ञेयः सर्वलोकमहेश्वरः ।
स तु संकर्षणः क्षोभ्य माया[7]मव्याकृतिं स्वयम् ॥ १० ॥
सर्वतेजोमयं रूपं प्रद्युम्नं[8] सोऽसृजत् प्रभुः ।
प्रद्युम्नं[9] स सिसृक्षन्[10] वै रसमात्रासु संसृजत् ॥ ११ ॥
अनिरुद्धं महाबाहुमेकार्णवजलेशयम् ।
सोऽसृजद् गन्धतन्मात्राद् देवदेवं चतुर्मुखम् ॥ १२ ॥
शक्तयः पञ्च विख्याता देवस्य परमात्मनः ।
अधिभूताधिदेवस्य अध्यात्मस्य च कारणम् ॥ १३ ॥
एतास्तन्मात्रशब्देन कीर्तिता मुनिभिः सदा ।
देवः सर्वात्मको ब्रह्मा सिसृक्षुर्विविधाः प्रजाः ॥ १४ ॥
तोयं ससर्ज भगवान् तस्मिन्नण्डमथासृजन् ।
पञ्चभूतात्मकं भूतं शुभं दिव्यं हिरण्मयम् ॥ १५ ॥
तस्मिन् संक्रमते जीवशक्तिरात्मोपसंहृता[11] ।
पञ्चतन्मात्रकाधारा संहृताखिलवृत्तिका[12] ॥ १६ ॥
प्राणो जीवेन संयुक्तो "वृत्तिमान्" इति शब्द्यते ।
जीवो व्याकृतसंज्ञस्तु प्राणस्त्वाध्यात्मिकः स्मृतः ॥ १७ ॥

[क] °व्याकृते –D. [4] तत् तत् परानन्दे—A. [5] अव्याकृतिः—B, C. [6] शब्दात्स्वमूर्ति—B, C. [7] क्षेमं मायया—A. [8] प्रयुक्तं—B. [9] प्रद्युम्नः—B. [10] सिसृक्षुर्वै—C. [11] शक्तिवाव्योपसंस्कृता—C. [12] वृत्तिकी -A. C. F.

प्राग्गोयुक्ता ततो बुद्धिः संजाता चाष्टवृत्तिका[a] ।
अहंकृतिस्ततो जज्ञे मनस्तस्मादजायत ॥ १८ ॥
अर्थाः[13] प्रजज्ञिरे पञ्च संकल्पादियुतास्ततः ।
शब्दः स्पर्शश्च रूपं च रसो गन्ध इति स्मृताः ॥ १९ ॥
ज्ञानशक्तियुतान्येतै[14]रारब्धानीन्द्रियाणि तु ।
त्वक्श्रोत्रघ्राणचक्षूंषि जिह्वा बुद्धीन्द्रियाणि च[ख] । २० ।
पादः पायु[15]स्तथा पाणी वाग् उपस्थश्च[ग] पञ्चमः ।
कर्मेन्द्रियाणि चैतानि पञ्चभूतान्यतः शृणु ॥ २१ ॥
आकाशवायुतेजांसि सलिलं पृथिवी तथा ।
स्थूलमेभिः शरीरं तु सर्वाधारं प्रजायते ॥ २२ ॥
एतेषां वाचका मन्त्राः प्रोच्यन्ते साम्प्रतं स्फुटम् ।
जीवतत्त्वं मकारं तु देहस्य व्यापकं न्यसेत् ॥ २३ ॥
प्राणतत्त्वं भकारं तु जीवयोनि[16]गतं न्यसेत् ।
हृदयस्थं बकारं तु बुद्धितत्त्वं न्यसेद् बुधः ॥ २४ ॥
फकारमपि तत्रैवमहंकारमपि न्यसेत् ।
मनस्तत्त्वं पकारं तु न्यसेत् सङ्कल्पसम्भवम् ॥ २५ ॥
शब्दतन्मात्रतत्त्वं तु नकारं मस्तके न्यसेत् ।
स्पर्शात्मकं धकारं तु वक्तृदेशे तु विन्यसेत् ॥ २६ ॥
दकारं रूपतत्त्वं तु हृद्देशे विनियोजयेत् ।
थकारं वस्तिदेशे तु रसतन्मात्रकं न्यसेत् ॥ २७ ॥
तकारं गन्धतन्मात्रं जङ्घायां विनियोजयेत्
णकारं श्रोत्रयोर्न्यस्य ढकारं विन्यसेत् त्वचि ॥ २८ ॥
डकारं नेत्रयुग्मे तु रसनायां ठकारकम् ।
टकारं नासिकायां तु ञकारं वाचि विन्यसेत् ॥ २९ ॥

(a) ···वृत्तिकी—A, C, F. 13 अर्थाः—C. 14 ···न्येभिः—C. ख तु—A, B, C.
15 पादपद्म—C. ग ···स्थं तु—A, B, C. 16 जीवोपरि B, C.

[झकारं करयोर्न्यस्य जकारं पादयोर्न्यसेत्।
छकारं पायुदेशे तु चकारं चाप्युपस्थके[घ] ॥ ३० ॥
विन्यसेत् पृथिवीभावं[17] ङकारं पादयुग्मके।]
नाभौ घकारमप्तत्त्वं[18] तैजसं गं हृदि न्यसेत्॥ ३१ ॥
खकारं वायुतत्त्वं तु नासिकायां निवेशयेत्।
ककारं विन्यसेन्नित्यं खतत्त्वं मस्तके बुधः॥ ३२ ॥
हृत्पुण्डरीके संन्यस्य गकारं[ङ] सूर्यदैवतम्।
कलाद्वादशसंयुक्तं न्यसेत् तत्र विचक्षणः[च] ॥ ३३ ॥
द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः।
कलाषोडशसंयुक्तं सकारं तत्र चिन्तयेत्[19] ॥ ३४ ॥
तन्मध्ये चिन्तयेन्मन्त्री बिन्दु[20] वह्नेस्तु मण्डलम्।
हकारं विन्यसेत् तत्र कलाभिर्दशभिर्युतम्॥ ३५ ॥
षकारं[21] विन्यसेत् पश्चात् प्रणवेन सुरोत्तम।
शकारश्च यकारश्च रेफो लश्च व एव च[22] ॥ ३६ ॥
आकारेण समायुक्ता नमस्कारान्तयोजिताः[23]।
प्रथमोङ्कारसंयुक्ता न्यसनीयाः सुरोत्तम॥ ३७ ॥
परमेष्ठी पौरुषी च निवृत्ति[24]र्विश्वसंज्ञिताः।
सर्वात्मशक्तिरित्येताः कीर्तिताः पञ्च शक्तयः॥ ३८ ॥
स्थाने तु प्रथमा प्रोक्ता द्वितीया आसने मता।
तृतीया शयने तद्वच् चतुर्थी यान[25]कर्मणि॥ ३९ ॥

[घ] देशे तु चकारं गुह्यमस्तके—D.; ततः परं छकारं तु पायुदेशे तु विन्यसेत्। ततः परं चकारं तु उपस्थे विन्यसेत् सुधीः।—K. [17] पृथिवीतत्त्वं—C, D, K [ ] A omits the lines within the box bracket. [18]·· तत्त्वस्तु—B, C. [ङ]···संन्यस्य सकारं—D., अकारं—K. [च] This line is omitted in K. [19] विन्यसेत्—B, C. [20] वायं—B, C. [21] ओङ्कारं—B, C, D. [22] तथैव च—B, C. [23] संयुताः—B, C; नमस्कारात्र योजिता—K. [24] निवृत्तिः—A. [25] पान—B, C.

प्रत्यर्चायां पञ्चमी तु प्रयोक्तव्या विजानता ।
लकारं विन्यसेन्मध्ये सर्वतेजोमयं शुभम् ॥ ४० ॥
ततो विचिन्तयेद् देवं परमात्मानमीश्वरम्
पौरुषस्थं स्व[26]भावस्थं सर्वविज्ञानविग्रहम् ॥ ४१ ॥
शान्तिसंभूति[27]कर्तारं चिन्तयेद् देशिकोत्तमः ।
एवं सूक्ष्मतमं[28] देवं ज्ञानरूपं सुरेश्वरम् ॥ ४२ ॥
वाच्यवाचकभावेन स्थितं व्याप्य स्वशक्तिभिः[29] ।
मन्त्रमूर्तिं ततस्तस्य ध्यात्वा कुर्यात् तु देशिकः ॥ ४३ ॥
या मूर्तिर्देशिकेनेह प्रारब्धात् तु प्रतिष्ठिता
तस्यास्तु मूलमन्त्रेण मन्त्रन्यासं समाचरेत् ॥ ४४ ॥
आदिमूर्तेस्तु वक्ष्यामि सकलीकरणं शृणु ।
स्वविग्रहे तथार्चायां यत्कार्यं देशिकोत्तमैः ॥ ४५ ॥
॥ ० ॥ "ओँ नमो भगवते वासुदेवाये" ति मूलमन्त्रः ॥ ० ॥
ओँकारं शिरसि न्यस्य नकारं प्राणगोचरे ।
मोकारं तु ललाटस्थं भकारं मुखमध्यतः ॥ ४६ ॥
कण्ठदेशे गकारं तु वकारं हृदये तथा ।
तेकारं दक्षिणभुजे वाकारं वामगोचरे ॥ ४७ ॥
सुकारं वामजङ्घायां देकारं दक्षिणे स्थितम्[छ] ।
वामपादे तु वाकारं यकारं दक्षिणे न्यसेत् ॥ ४८ ॥
ओंकारं चिन्तयेत् प्राज्ञः स्फुरज्ज्वालावलीधरम् ।
नकारं स्फटिकाभासं[ज] मोकारं चेन्द्र[30]नीलवत् ॥ ४९ ॥
तेजोनिभं भकारं तु गकारं काञ्चनप्रभम् ।
वकारं पद्मपत्राभं तेकारं स्वर्णसुप्रभम्[31] ॥ ५० ॥

[26] शु—B, C. [27] संभृति A, B. [28] सूक्ष्मजित्वं -B, C. [29] स्वशक्तितः B, C.
[छ] दक्षसंस्थितम्—K. [ज] स्फुटिकाभाषि—D. [30] चन्द्र A. [31] सप्रभम्—A, F.

वाकारं कुन्दसदृशं सुकारं विद्युत्प्रभम्[32] ।
देकारं कर्णिकाराभं वाकारं हिमसन्निभम्[33] ॥ ५१ ॥
पद्मरागसमाभासं यकारं तु विचिन्तयेत् ।
केशवं शिरसि न्यस्य वक्त्रे नारायणं प्रभुम् ॥ ५२ ॥
ग्रीवायां माधवं देवं गोविन्दं भुजयुग्मके ।
हृदये विन्यसेद् विष्णुं पृष्ठे तु मधुसूदनम् ॥ ५३ ॥
जठरे वामनं देवं कटिदेशे तु विक्रमम्[*] ।
श्रीधरं वामजङ्घायां हृषीकेशं तथान्यतः[34] ॥ ५४ ॥
गुल्फदेशे पद्मनाभं पादे दामोदरं प्रभुम् ।
हृदयादिषडङ्गञ्च यथायोगं च[35] विन्यसेत् ॥ ५५ ॥
एतत् साधारणं प्रोक्तमादिमूर्तेस्तु सत्तम ।
अथवा यस्य देवस्य प्रथमे स्थापनं भवेत्[36] ॥ ५६ ॥
तस्यैव मूलमन्त्रेण सजीवकरणं भवेत् ।
यस्या मूर्तेस्तु यन्नाम तस्याद्यं चाक्षरं[37] च यत् ॥ ५७ ॥
तत् स्वरैर्द्वादशैर्भेद्य दीर्घाण्यङ्गानि कल्पयेत्[38] ।
हृदयादीनि देवेश मूलं च दशमं कुरु ॥ ५८ ॥
यथा देहे तथा देवे[39] तत्त्वानि विनियोजयेत् ।
ततो गन्धैश्च पुष्पैश्च नैवेद्यैर्विविधैरपि ॥ ५९ ॥
लड्डुकैर्वटकैः पूपैर्घृतपूरैः सफाणितैः[ज] ।
कृसरैः पायसैर्भक्तैर्नैवेद्यै[40]रर्चयेद्धरिम् ॥ ६० ॥
विविधैश्चाप्यलङ्कारैर्हेम[41]पुष्पैः समुज्ज्वलैः ।
प्रवालपद्माभरणैर्हेमैः पद्मैः समुज्ज्वलैः ॥ ६१ ॥

[32] विद्युत्सप्रभम्—A.; विद्युत्समप्रभम्—F. विद्युता समम्—K. [33] हि समन्वितम् —A. [*] त्रिविक्रमम्—K. [34] तु वामतः—B, C., ततोऽन्यतः K. [35] तु—B, C. [36] चरेत्—B, C. [37] तस्याद्यम् अक्षरं—B, C. [38] दीर्घाणि परिकल्पयेत्—B, K. [39] देवे तथा देहे—B, C. [ज] सफालितैः—Var. ed;. सफाणितैः -F., सुपाचितैः—K. [40] नैवेद्यं—B, C.·· नैवेद्यैर्दर्शये···var;, ed. K. [41] गन्ध -B, C.

प्रभूतैर्याज्ञिकैर्द्रव्यैर्देयं[42] चक्राब्जमण्डले ।
यजेत भक्तितो विष्णुं भोगमोक्षफलप्रदम् ॥ ६२ ॥
चन्दनागुरुकर्पूरैः मृगदर्पैः ससर्जकैः ।
दद्यात् पञ्चविधं धूपं पुष्पं नानाविधं शुभम् ॥ ६३ ॥
समन्ताद्दीपमालाभिः शोभयेद् देवसत्तम ।
पूर्ववच्चासनं ध्यायेत् सपात्रं सपरिच्छदम् ॥ ६४ ॥
शुभं चक्रं द्वादशारमुपरिष्टाद् विचिन्तयेत्
त्रिनाभिचक्रं द्विनेमिं[43] सूक्ष्मं तत्त्व[44]समन्वितम् ॥ ६५ ॥
प्रधिदेशे ततः प्राज्ञः प्रकृत्यादीन् निवेशयेत्[45] ।
पूजयेदारकाग्रेषु सूर्यं द्वादशधा पुनः[46] ॥ ६६ ॥
कलाषोडशसंयुक्तं सोमं तत्र विचिन्तयेत् ।
दहनत्रितयं[47] नाभौ चिन्तयेद् देशिकोत्तम ॥ ६७ ॥
पद्मं च द्वादशदलमन्तमध्ये विचिन्तयेत् ।
तन्मध्ये पौरुषीं शक्तिं ध्यात्वाभ्यर्च्य तु देशिकः ॥ ६८ ॥
प्रतिमायां तु यो न्यस्तस्तत्र तं पूजयेत् सुधीः
गन्धपुष्पादिभिः सम्यक् साङ्गं साधारणं क्रमात् ॥ ६९ ॥
द्वादशाक्षरबीजैस्तु[48] केशवादीन् समर्चयेत् ।
आरकेष्वानुपूर्व्येण द्वादशारे तु[49] मण्डले ॥ ७० ॥
पश्चाद्[ट] यथोक्तविधिना लोकपालान्तरं[50] क्रमात् ।
प्रतिमामर्चयेत् पश्चात् गन्धपुष्पादिभिर्द्विजः ॥ ७१ ॥
पौरुषेण च[51] सूक्तेन प्रत्यृचं सुरसत्तम ।
श्रियाः[52] सूक्तेनार्चयीत प्रत्यृचं पिण्डिकामयम्[ठ] ॥ ७२ ॥

[42] यं omitted in A. [43] चक्रं द्विनेमिं—C. द्विनेमिः—K. [44] अक्ष—C. श्लक्ष्णं—K. [45] विचिन्तयेत्—B. [46] बुध—C. [47] त्रितये—C. सकनत्रितयं—K. [48] बीजस्तु—C. [ट] यष्टा—K. [49] द्वादशाक्षर—A. [50] ...लादिकं—B, C. [51] तु—A. D. [ठ] कामपि—K. [52] श्रिया—A.

जननादिक्रमात् पश्चाज् जनयेत् वैष्णवानलम् ।
तत्क्रमं वर्णयिष्यामि दीक्षायां पुरुषोत्तम[53] ॥ ७३ ॥
हुत्वाग्निं वैष्णवैर्मन्त्रैः कुर्याच्छान्त्युदकं बुधः[54] ।
तत् सिक्त्वा प्रतिमामूर्ध्नि वह्निप्रणयनं कुरु ॥ ७४ ॥ (?)
दक्षिणे "ऽग्निं दूत" मिति कुण्डेऽग्निं प्रणयेद् बुधः ।
"अग्निमीडे" ति पूर्वे तु कुण्डे ऽग्निं प्रणयेद् बुधः* ॥ ७५ ॥
उत्तरे प्रणयेदग्निम् "अग्निमग्निस्तु[ड] धीमहि" ।
अग्निप्रणयने मन्त्र "स्त्वमग्ने द्युभि" रुच्यते** ॥ ७६ ॥
पलाशसमिधानां तु घृताक्तानां महानले[ढ] ।
अष्टोत्तरसहस्रं तु कुण्डे कुण्डे च होमयेत् ॥ ७७ ॥
वेदादिमन्त्रैर्देवेश[55] ततो व्रीहींस्तु होमयेत् ।
तिलानां घृतयुक्तानां कुण्डे कुण्डे तु मूर्तिपाः ॥ ७८ ॥
सहस्रैकं व्याहृतिभिर्जुहुयुः साज्यमक्षतम्[ण] ।
मूलमन्त्रेण जुहुयुः स्वाहान्तेन सुरोत्तम ॥ ७९ ॥
अष्टोत्तरसहस्रं तु कुण्डे कुण्डे यथाविधि ।
घृतहोममिदं प्रोक्तं शान्तिहोममतः शृणु ॥ ८० ॥
मधुरत्रितयेनाथ जुहुयाद् द्वादशाक्षरैः ।
पादौ नाभिं हृच्छिरश्च स्पृशेद्धुत्वा[त] यथाक्रमम् ॥ ८१ ॥
घृतं दधि पयश्चैव माक्षिकं देशिकोत्तमः[56] ।
प्रतिलोमं स्पृशेच्च चापि[57] हुत्वा तु मधुरत्रयम् ॥ ८२ ॥

[53] दीक्षापाते सुरोत्तम—A, D, E, F. दीक्षायां ते सुरोत्तम—K. [54] पुनः—B, C. [ड] अग्निमग्नीन्तु—D. हवामहे—K. [ढ] महालये—Var. ed.; महावने—F. [55] देवेशं—B, C. * This line is omitted in F.; K reads अग्निमग्नीति पूर्वेति कुण्डेऽग्निं प्रणयेद् बुधः । ** "त्वमग्नेऽस्त्वि"ति पश्चिमे—B, D. [ण] साष्टमं शतम्—K. [त] हृच्छिरश्च स्थाने हुत्वा—F. [56] देशिकः स्वयं—C, D, K. [57] विशेच्चापि—A.; स्पृशेद् वापि B. C.

शतमष्टोत्तरं हुत्वा विष्णु शिरसि संस्पृशेत्
तथैव हुत्वा पञ्चाशत् हृदये संस्पृशेद्धरिम् ॥ ८३ ॥
ततोऽष्टाविंशतिं हुत्वा[58] नाभिदेशे हरिं स्पृशेत् ।
अष्टावष्टौ ततो हुत्वा पादाङ्गुष्ठौ च[59] संस्पृशेत् ॥ ८४ ॥
यागमण्डपमासाद्य दक्षिणद्वार[60]गोचरे
उत्तराभिमुखाः स्थाप्याश्चत्वारो धेनवोऽनघ ॥ ८५ ॥
गङ्गेति प्रथमा ख्याता द्वितीया यमुनेति च ।
गोदावरी तृतीया च चतुर्थी च सरस्वती ॥ ८६ ॥
दोहनं विष्णुगायत्र्या कृत्वा पश्चाच्च् चरुं श्रपेत् ।
गायत्र्या होमयेच्चैव गायत्र्यैव बलिं हरेत् ॥ ८७ ॥
[नारायणाय विद्महे वासुदेवाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् ॥]*
भोजयेद् ब्राह्मणांश्चैव मण्डपादुत्तरे द्विज[61] ।
पायसेनाज्ययुक्तेन शर्करामिश्रितेन च ॥ ८८ ॥
मासाधिपानां तुष्ट्यर्थं दद्यात् कनकदक्षिणाम् ।
गाश्च तांस्तान् समुद्दिश्य एकैकाय[थ] निवेदयेत् ॥ ८९ ॥
देवासुरादीन्[द] उद्दिश्य कुर्याद् बलिनिवेदनम् ।
अधिवास्यैव देवेशं कुर्याज् जागरमादरात् ॥ ९० ॥
मङ्गलैर्ब्रह्मघोषैश्च जयशब्दरवैस्तथा ।
पुण्याहशब्दैर्विपुलैर्गीतवादित्रनिःस्वनैः ॥ ९१ ॥
शङ्खघोषेण महता वीणावेणुरवेण च
कोलाहलैश्च भेर्याद्यैः कुर्याज् जागरणं हरेः ॥ ९२ ॥
यस्त्वेवं विधिना भक्त्या कुर्याद्देवाधिवासनम् ।
स सर्वतीर्थयज्ञानां दानानां तपसां तथा ॥ ९३ ॥

[58] ··विंशतिर्हुत्वा –C. [59] तु –B, C, D. [60] दक्षिणे धन –B C. * [] Found in K only. [61] द्विजः—B, C. [थ] देशिकाय—K. [द] देवान् सुरानीद् K.

फलं शतगुणं प्राप्य विष्णुलोके महीयते ।
आभूतसंप्लवं यावद् देववत् तत्र मोदते ॥ ६४ ॥

॥ ३७ ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे सप्तत्रिंशः अधिवासपटलः ॥ ३७ ॥

## अष्टत्रिंशः पटलः

श्रीभगवान् उवाच—

अधिवास्य[1] विधानेन देवदेवं हरिं प्रभुम् ।
पिण्डिकास्थापनार्थाय गर्भागारं विशेद् गुरुः ॥ १ ॥
वृत्तं वा चतुरस्रं वा आयतं चतुरस्रकम् ।
वृत्तायतं तु प्रासादं चतुर्विधमुदाहृतम् ॥ २ ॥
चतुरस्रायते गर्भे तथा[2] वृत्तायते द्विजः ।
स्थापयित्वा विधानेन सर्वलोकपितामहम् ॥ ३ ॥
निविष्टं यानगं वापि वृत्ते संस्थापयेद् बुधः ।
चतुरस्रे स्थापयीत स्थितं[3] साधारणं हि तत् ॥ ४ ॥
स्थानासनं तथा यानं चतुरस्रे स[4]वृत्तके ।
आयते शयनं कार्यं न स्थानं नासनं तथा ॥ ५ ॥
यादृशं गर्भगेहं[5] तु कृतं सुरगणार्चित[6] ।
सं[7]विभज्य प्रकुर्वीत सप्तभागं विचक्षणः ॥ ६ ॥

[1] अधिवास—A. [2] यथा—A, B. [3] सिंहं—A. [4] सु—B, C. [5] ···देहस्तु—A.
[6] ···णार्चितः—C. ···र्चितम्—K. [7] तं—B, C. K.

पुनश्च सप्तधा कृत्वा स्थानभागं प्रकल्पयेत् ।
ब्रह्मभागं भवेन्मध्यं[8] दैवं स्यात् तदनन्तरम् ॥ ७ ॥
तृतीयं मानुषं भागं पैशाच्यं च चतुर्थकम् ।
द्विभुजं ध्यानयोगस्थं निविष्टं स्थितमेव च[9] ॥ ८ ॥
चतुर्भुजं ब्राह्मणे तु[10] भागे संस्थापयेद्धरिम् ।
व्यक्ताव्यक्तं तथा व्यक्तं लिङ्गं ब्राह्मे तथा न्यसेत्[*] ॥ ९ ॥
स्वमूर्तिं ब्रह्मभागे तु व्योमं वाऽखण्डजन्मनः[11] ।
ब्रह्मभागं परित्यज्य किंचिदाश्रित्य वा द्विज ॥ १० ॥
सदैव स्थापयेद् देवं देवमानुषभागयोः ।
दैव[12]मानुषभागाभ्यां शयनं परिकल्पयेत् ॥ ११ ॥
दारवीं मृन्मयीं मूर्तिं देव[13]स्थाने निवेशयेत्
मानुषं किञ्चिदाश्रित्य आसीनं स्थापयेद्धरिम् ॥ १२ ॥
नरसिंहं वराहं च देव[14]भागे नियोजयेत् ।
विघ्नेशमम्बिकां देवीं मातृभूतगणां तथा ॥ १३ ॥
आदित्यादीन् ग्रहान् यक्षान्[15] एवमादींस्तथापरान् ।
पैशाचे स्थापयेत् स्थाने नात्र कार्या विचारणा ॥ १४ ॥
स्वस्थानवर्जिताः सर्वे भयदुःखामयप्रदाः ।
तस्मात् सर्वप्रयत्नेन[16] स्वे स्वे स्थाने[17] नियोजयेत्[18] ॥ १५
सर्वसाधारणं वक्ष्ये पिण्डिकास्थापनं तव ।
दैवमानुषभागाभ्यां[19] स्थाप्या यत्नाद्धि पिण्डिका ॥ १६ ॥
नपुंसकशिलायां तु रत्नन्यासं समारभेत् ।
वस्त्राभरणगन्धाद्यैः पूर्ववद्भूषितो गुरुः[20] ॥ १७ ॥

[8] भवेदेवं –C. [9] वा -B, C. [10] वा ब्राह्य तु -B, C. * ब्राह्मे निवेशयेत्—K. [11] This line and the line preceding it are omitted in A. and D. B, C. have this line mutilated. Our reading is from K. [12] देव –C. [13] दिव्यस्थाने—B, C. [14] दैव B, C. [15] हरेद् रत्नान् B, C. [16] सर्वेन यत्नेन A. [17] स्वस्थाने —B, C. [18] विनियोजयेत्—B, C. [19] भागाद्या—C. [20] भूषिते तव—C.

हुत्वाहुतिशतं विप्र नारसिंहेन वा पुनः ।
तेनैवामन्त्र्य रत्नादीन् पिण्डिकाश्वभ्रके[21] न्यसेत् ।। १८ ।।
वृत्तायते च प्रासादे यत्र तत्र च कारयेत्* ।
गुग्गुलुं द्रावयित्वा तु गर्भेषु[22] विनिवेशयेत् ।। १९ ।।
रत्नादीनां तु चिप्तानां निश्चलीकरणाय तु ।
ततो निवेशयेत् तांस्तु दिशासु विदिशासु च ।। २० ।।
प्रथमावरणे व्रीहीन् रत्नान्यपि द्वितीयके ।
तृतीये विन्नसेद्धातून् लोहं चापि चतुर्थके ।। २१ ।।
प्रतिवारणगर्भेषु[23] पञ्चमावरणे द्विजः ।
चन्दनादींस्तु विप्रेन्द्र चाष्टौ[24] दिक्षु निवेशयेत् ।। २२ ।।
एकैकं दिक्षु विन्यस्य मध्ये चैवापरं[25] न्यसेत् ।
ऐन्द्र्यां च चन्दनं न्यस्य आग्नेय्यां रक्तचन्दनम् ।। २३ ।।
कृष्णागुरुं दक्षिणस्यां नैर्ऋत्यामपरागुरुम्[26] ।
उशीरं पश्चिमे भागे विष्णुक्रान्ता[27]मथापरे ।। २४ ।।
सहदेवामुदीच्यां तु लक्ष्मणा[क] मीशगोचरे ।
ब्राह्मीं सुवर्चला[28]मृद्धिं वृद्धिं ब्राह्मे निवेशयेत[29] ।। २५ ।।
धान्यमैन्द्र्यां निवेश्याथ आग्नेय्यां तु कुलत्थकम्[ख] ।
यवान्[30] दक्षिणभागे तु गोधूमं नैर्ऋते न्यसेत् ।। २६ ।।
तिलांस्तु पश्चिमे भागे[31] नीवारं वायुगोचरे ।
मुद्गमुत्तरतो दद्यात् निष्पावान् ईशगोचरे ।। २७ ।।
मध्ये सिद्धार्थकं दद्यात् रत्नन्यासं शृणुष्व मे[32] ।
वज्रं तु[33] पूर्वतो दद्यादाग्नेय्यां मौक्तिकं न्यसेत्[34] ।। २८ ।।

[21] शुभ्रके—C. * तत्र तत्र विचारयेत् -F. [22] गर्भे तु—A. गर्तेभ्यो—K. [23] ···गर्भे तु—A. [24] श्चाष्टौ -C. [25] ···परे –A, B. [26] दर्भमुत्तमम् –B, C. [27] ···क्रान्त A. [क] लक्षणा—A, B. C. [28] सुवर्चलां मध्ये—A, B. [29] निवेदयेत् –C. [ख] ···विन्यसेत् तथा —var. ed. [30] यवं –C. माषं—K. [31] दद्यात्—B, C, D. [32] समाचरेत् A, D. [33] च—B, C. [34] तथा—A, D.

वैदूर्यं दक्षिणे दद्यात् शङ्खं निर्ऋतिगोचरे ।
स्फटिकं वारुणे दद्यात् पद्मरागं तु वायवे ॥ २९ ॥
उत्तरे चन्द्रकान्तं तु ऐशान्यामिन्द्रनीलकम् ।
पद्मरागं न्यसेन् मध्ये यथावद् द्विजसत्तम ॥ ३० ॥
हरितालं न्यसेत् पूर्वे आग्नेय्यां तु मनःशिलाम् ।
अञ्जनं दक्षिणे दद्यान् कान्तिकं ब्रह्मगोचरे ॥ ३१ ॥
सौराष्ट्री वारुणे देया वायव्यां गैरिकं तथा ।
कांस्यं चैवोत्तरे दद्यादैशान्यां गन्धकं तथा ॥ ३२ ॥
पारदं तु न्यसेत् मध्ये यथा वा त्रिदशेश्वर ।
हिरण्यं पूर्वतो दद्यादाग्नेय्यां तारमुत्तमम् ॥ ३३ ॥
आयसं दक्षिणे न्यस्य आग्नेय्यां[35] त्रपुषं[36] तथा ।
पश्चिमे विन्यसेद् व्योपमारं[37] वायव्यगोचरे ॥ ३४ ॥
सिह्लकं[38] चोत्तरे न्यस्य शुल्वमीशानगोचरे ।
पद्मं कूर्मं तथा शङ्खं[39] पृथ्वीमध्ये निवेशयेत् ॥ ३५ ॥
सुमेरुं च सुरश्रेष्ठ सर्वमेतद् हिरण्मयम् ।
एषामेकतमं मध्ये न्यसेत् सर्वाण्यथापि वा[40] ॥ ३६ ॥
"नमो हिरण्य" मन्त्रेण ब्रह्मस्थाने निवेशयेत् ।
नराणां मूर्तिमन्त्राणां मन्त्रैरेतन्निवेशयेत् ॥ ३७ ॥
पुण्डरीकाक्षमन्त्रेण गायत्र्या वा निवेशयेत् ।
अथवा मूलमन्त्रेण मन्त्रेणाष्टाक्षरेण वा ॥ ३८ ॥
दिगीशानां[41] तु मन्त्रेण रत्नादीन् विनिवेशयेत् ।

तद् यथा—

"( ॐ )[42] शक्रः सुरपतिः श्रीमान् सहस्रनयनोज्ज्वलः ॥ ३९ ॥

[35] नैर्ऋत्यां—C, F. [36] त्रपुकं—A, C. [37] नार—C. विन्यसेद्योधियारं—F. [38] सीसकं—B, C, F. K. [39] सूक्ष्म—A. [40] च—B, C. [41] दिगीशानं—A [42] ॐ is omitted in A.

यष्टा यः क्रतुमुख्यानां नमस्तस्मै महात्मने ।"
"ॐ त्रातार"मिति मन्त्रेण सान्निध्यं तत्र[43] कारयेत् ॥ ४० ॥
"अज[44]पृष्ठगतः शक्तिर्यस्य हस्ते महात्मनः ।
हव्यकव्यवहो यो वै नमस्तस्मै महात्मने" ॥ ४१ ॥
"ॐ अग्न आयाहि" मन्त्रेण सान्निध्यं तत्र कारयेत् ।
"ॐ कृष्णाञ्जननिभो रौद्रो दण्डपाणिः स्रगुज्ज्वलः ॥ ४२ ॥
सर्व[45]प्रेताधिपो देवो नमस्तस्मै महात्मने ।
सान्निध्यकरणे[46] तस्य मन्त्र "स्त्वसि यः" स्मृतः ॥ ४३ ॥
"ॐ घोरदंष्ट्राकरालस्तु खड्गपाणिः सुभैरवः[47] ।
राक्षसाधिपतिर्देवो नमस्तस्मै महात्मने" ॥ ४४ ॥
सान्निध्यार्थं तस्य[48] मन्त्रः "एष ते निर्ऋते" स्मृतः ।
"सप्तसागरदेहस्तु पाशपाणिर्महाद्युतिः ॥ ४५ ॥
यादसां पतिरेको यो[49] नमस्तस्मै महात्मने ।"
तस्यावाहन[50]मन्त्रस्तु[51] "पञ्चनद्यः सरस्वती" । ४६ ॥
(ॐ) "सप्तस्वरानुगा यस्य योऽनुगीतो[52] मनीषिभिः ।
अशरीरेति विख्यातो नमस्तस्मै महात्मने" ॥ ४७ ॥
मन्त्रस्तस्यापि सान्निध्ये[53] "वात आ वातु भेषजम्" ।
"धनाधिपो ह्रस्वमूर्तिर्गदाहस्तो नृवाहनः ॥ ४८ ॥
उत्तराशाधीशः* श्रीमान् नमस्तस्मै महात्मने" ।
"सोमं राजे" ति मन्त्रोऽयं तस्य सान्निध्यकारकः ॥ ४९ ॥
"विद्याधिपो वृषारूढः शूलपाणिर्महाबलः ।
त्रैलोक्यवन्दितः श्रीमान् नमस्तस्मै महात्मने" ॥ ५० ॥

[43] तस्य -C. [44] अजा—B, C. अजापृष्ठगतः शक्तिपाणिर्देवनमस्कृतः—K. [45] सर्प—A. [46] सान्निध्यमयमत्—B, C. [47] सुरेश्वर -B, C. घोरदंष्ट्राकरालास्यः खड्गहस्तः सुभैरव K. [48] सान्निध्यकरणे B, C. [49] वा -A. [50] स्यालभन -A. [51] मन्त्रश्च —C. [52] निगीतो -A ; निर्गीतो -F. [53] सान्निध्यं -C. * उत्तराशाधिपः -F.

"ईशा वास्ये" ति मन्त्रेण तनुसान्निध्यं प्रकल्पयेत्[54] ।
"य इमां सकलां पृथ्वीं शैलसागरभूषिताम् ॥ ५१ ॥
बिभर्ति नाना[55]प्रतिमां नमस्तस्मै महात्मने ।"
"नमोऽस्तु सर्प" मन्त्रेण सान्निध्यं तस्य कारयेद्[56] ॥ ५२ ॥
"ॐ ब्रह्मा चतुर्मुखः स्वामी सर्वलोकपितामहः ।
कमण्डलुधरः श्रीमान् तस्मै नित्यं नमो नमः"[57] ॥ ५३ ॥
"ब्रह्मा देवे"ति मन्त्रेण सान्निध्यं तस्य कल्पयेत्[58] ।
रत्न[59]न्यासमिमं कृत्वा गायत्र्यालभनं स्मृतम् ॥ ५४ ॥
छादयेन्नेत्रपट्टेन गन्धाद्यैरधिवासयेत् ।
ओषधीनामलाभे तु विष्णुक्रान्ता विशिष्यते[ग] ॥ ५५ ॥
बीजानामप्यलाभे तु यवं सर्वत्र दापयेत् ।
अलाभे सर्वरत्नानां[60] मुक्ता सर्वत्र शस्यते ॥ ५६ ॥
अलाभे सर्वरत्नानां हरितालं विनिक्षिपेत् ।
अलाभे सर्वलोहानां[61] काञ्चनानि प्रदापयेत् ॥ ५७ ॥
रत्नन्यासमिमं कृत्वा नपुंसकशिलातले ।
न्यसेत् पादशिलां तत्र स्त्रीलिङ्गे[घ] स्फुलिङ्गिनाम् ॥ ५८ ॥
ततः[62] संपूजयेत् विद्वान् पिण्डिकां शक्तिरूपिणीम्
महारङ्गेन[63] वस्त्रेण छाद्य गन्धादिनार्चयेत् ॥ ५९ ॥
पुष्पमूलैः फलैर्हृद्यैः सितया चार्द्रकेण च ।
अभ्यर्च्य विन्यसेद् विद्वान् लक्ष्मीबीजं समाहितः ॥ ६० ॥
कृत्वैवं पिण्डिकाकर्म तदूर्ध्वं प्रतिमां[64] न्यसेत् ।
प्रासादानां तु सर्वेषां प्रतिमा जीव उच्यते ॥ ६१ ॥

[54] प्रकम्पयेत्—A, B ; सान्निध्यं तस्य कारकः—C. [55] विभक्तिमाला —A ; विभर्ति माला —K. [56] कल्पयेत्—A. [57] नमस्तस्मै महात्मने—B, C. [58] कारयेत्—C. [59] मन्त्र A. [ग] विष्णुक्रान्तां विशांपते—All others except K. [60] सर्वधातूनां—A, C. [61] सर्वलौहानां —B, C. [घ] स्फुलिङ्गे—K. [62] तत्र—B, C. [63] मह A, B. [64] प्रतिमा -A.

प्रतिमानां तु सर्वासां पादपीठः शिलामयः ।
तस्मात् सर्वप्रयत्नेन पीठोर्ध्वे[65] प्रतिमां न्यसेत् ।। ६२ ।।

।। ३८ ।। इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे अष्टत्रिंशः रत्नन्यासपटलः । ३८ ।।

## एकोनचत्वारिंशत्तमः पटलः

श्रीभगवान् उवाच—

रत्नन्यासविधिं कृत्वा प्रतिष्ठा[1]मारभेत् गुरुः ।
सशलाकैर्दर्भपुञ्जैः सहदेवासमन्वितैः ।। १ ।।
सहाक्षतैस्तु सत्कृत्य गन्धगव्येन शोधयेत् ।
प्रोक्षयेद् गन्धतोयेन नदीतीर्थोदकेन च ।। २ ।।
होमार्थं[2] स्थण्डिलं कुर्यात् सिकताभिः समन्ततः ।
सार्धहस्तप्रमाणं तु चतुरस्रं सुशोभनम् ।। ३ ।।
अष्टदिक्षु यथान्यायं कलसानपि पूजयेत् ।
मन्त्रेणाष्टाक्षरेणैव पूर्वादिक्रमयोगतः ।। ४ ।।
आनीय[3] संस्कृतं वह्निं "त्वमग्ने व्रतपे"[क] त्यृचा ।
पलाशसमिधानां तु घृताक्तानां सुरेश्वर । ५ ।।
शतं वाथ सहस्रं वा गायत्र्या विष्णुसंज्ञया ।
जुहुयाच् च शतं पश्चादाज्यमष्टाक्षरेण च[4] । ६ ।।
पूर्णाहुतिं शान्तितोयं कुर्यात् तत्र विचक्षणः ।
कलसेषूदकं गृह्य ताम्रपात्रे निवेशयेत् ।। ७ ।

[65] पीठोर्ध्व—omitted in A, B. [1] प्रतिमा—A. [2] होमार्थे—A, D. [3] आनीयं—A. [क] व्रतपतेत्यृचा—D. [4] तु—B, C.

मन्त्रये[5]च्छतवारांस्तु मूलमन्त्रेण देशिकः।
सेचयेद् देवतामूर्ध्नि "श्रीश्च ते" ऽप्यनयानघ ॥ ८ ॥
ब्रह्मयानेन चोद्धृत्य "उत्तिष्ठ ब्रह्मणस्पते"।
"तद्[6] विष्णो" रिति मन्त्रेण प्रासादाभिमुखं नयेत् ॥ ९ ॥
शिबिकायां हरिं स्थाप्य रथे वाथ सुयन्त्रितम्[7]।
भ्रामयीत पुरं सर्वमथवायतनं स्वकम् । १० ।
प्रदक्षिणेन देवेशं सर्वशोभासमन्वितम्।
ततो मङ्गलघोषैश्च गीतै[8]र्मधुरनिःस्वनैः। ११ ।
स्तुवद्भिर्मागधैः सूतैर्वाद्यैर्नानाविधैः शुभैः
गायद्भिर्ब्राह्मणैः साम सङ्काकारेण सर्वशः । १२ ॥
पताकाभिर्विचित्राभिर्ध्वजैर्नानाविधैः शुभैः[9]।
देवदेवं महाभागं हरिं सर्वजगद्गुरुम् । १३ ॥
संसारार्णवसन्तारपोतभूतं सुरेश्वरम्।
कर्तॄणां स्थापतीनां च शिल्पिनां पुरवासिनाम् ॥ १४ ।
स्थापकानां च भृत्यानां पावनं पुण्यवर्धनम्[10]।
भ्राम्य स्वायतनद्वारि मुखं कृत्वा निवेशयेत् ॥ १५ ॥
शिबिकायां[ख] तु संस्थाप्य स्नपयेन्मङ्गलान्वितम्।
चतस्रोऽविधवास्तत्र दिव्यमन्त्रादिपण्डिताः[11]। १६ ॥
सव्यापसव्यसूत्रेण वेष्ट्य स्पृश्य कुशेन[12] तु।
आचार्येणाभ्यनुज्ञाता घटैर्मलयरूषितैः[13] ॥ १७ ॥
स्न[14]पयन्ति हरिं भक्त्या अष्टमङ्गलसंयुतम्।
ततो गन्धादिनाभ्यर्च्य मूलमन्त्रेण देशिकः ॥ १८ ॥

[5] अर्चयेच् B, C. [6] त्वं –B, C, D. [7] सुमन्त्रितम्—B, C. [8] मङ्गलैर्ब्रह्मघोषैश्च सर्वैः—B, C. [9] '''स्तथा B, C.; K. [10] पावकं पुण्यवर्धकम्—A. [ख] एककायां तु—D; एडकायां तु—F. एरकायां तु—K. [11] मण्डिताः—B, C.; K. [12] कुलेन—A. सूत्राणावेष्ट्या-स्पृश्य—K. [13] भूषितैः—B, C. मङ्गलभूषितैः—K. [14] स्ना—C.

शुक्लवस्त्रेण संछाद्य अष्टाङ्गार्घ्यं निवेदयेत्।
पात्रेण[15] यन्त्रितं कृत्वा "अतो देवे"ति चालयेत्॥ १६ ॥
अद्वार[16]बन्धे प्रासादे द्वारेणैव प्रवेशयेत्।
द्वारबन्धे कृते दैवे[17] आकाशेन प्रवेशयेत्॥ २० ॥
द्वारबन्धे कृते वापि[18] अरत्नांशस्तं प्रवेशयेत्।
"देवस्य त्वे"ति मन्त्रेण तिर्यगूर्ध्वमधस्तथा॥ २१ ॥
पिण्डिकोर्ध्वं ततो देवं मन्त्रितं धारयेत् क्षणम्
ततः शङ्कुघटीतोयैर्दैवज्ञो लग्नमादिशेत्[19]॥ २२ ॥
ज्ञात्वा सम्यक्स्थिरं[20]लग्नं मनस्सं वा निवेशयेत्[21]।
पिण्डिकायां सुरश्रेष्ठ मन्त्रेणानेन देशिकः॥ २३ ॥
॥ ० ॥ "ॐ त्रैलोक्यविक्रान्ताय[22] त्रिविक्रमाय नमो नमः" इति ॥ ० ॥
संस्थाप्य पिण्डिकायां तु स्थिरं कुर्याद् विचक्षणः।
"ध्रुवा द्यौ" रितिमन्त्रेण "विश्वतश्चक्षु" रित्यपि॥ २४ ॥
पञ्चगव्येन तु तं स्नाप्य क्षाल्य गन्धोदकेन तु।
पूजयेत् सकलीकृत्य साङ्गं सावरणं हरिम्॥ २५ ॥
ध्यायेत् तं परमात्मानं निष्कलं निर्मलं विभुम्।
गगनं तस्य मूर्तिस्तु[23] पृथिवी तस्य पिण्डिका[24]॥ २६ ॥
कल्पयेद् विग्रहं तस्य तैजसैः परमाणुभिः।
तेजोमयं ततो ध्यायेत् शङ्खचक्रगदाधरम्॥ २७ ॥
मन्त्रमूर्तिं[25] ततः कुर्यान्मूलमन्त्रेण वै हरेः।
स्थिते विभौ[26] स्थितिन्यासमासीने सृष्टिसंज्ञितम्॥ २८ ॥
शायिते संहृतिन्यासं यानस्थे सर्वमेव च।
एवं न्यासविधिं कृत्वा ध्यायेद् विष्णुं सुरेश्वरम्॥ २६ ॥

[15] यन्त्रेण—B, C. K. [16] सद्वारबन्धे—B, C. [17] कृता देव B, C.; कृते देवम् -D, F. K. [18] चापि—B, C. [19] दैवज्ञान् लग्नमाविशेत्—A. [20] स्थितं—A. [21] निवेदयेत्—A. [22] विक्रमाय—B, C. [23] मूर्तिं तु—B. मूर्ध्निस्थं—C. [24] पीठका—C. K. [25] मन्त्रमूर्ति—A, B. [26] विष्णौ—B.

कृत्वा चामरमध्यस्थं सर्वकर्मैकसाक्षिणम् ।
क्षेत्रज्ञचित्स्वभावं तमणीयांसमणोरपि ॥ ३० ॥
अदोषं परमानन्दं[ग] प्रतिमायां निवेशयेत्[27]
सञ्जीवकरणं कृत्वा प्रणवेन निबोधयेत् ॥ ३१ ॥
सान्निध्यकरणार्थाय हृदयं स्पृश्य देशिकः ।
पौरुषं तु जपेत् सूक्तं ध्यायेद् देवं सुरेश्वरम्[28] ॥ ३२ ॥
जपेत् तथापरं मन्त्रमिमं गुह्यं सनातनम् ।
"ॐ नमस्तुभ्यं[29] सुरेशाय सन्तोषविभवात्मने ॥ ३३ ॥
ज्ञानविज्ञानरूपाय ब्रह्मतेजोऽनुयायिने ।[30]
गुणानुक्रान्त[31]वेशाय पुरुषाय महात्मने ॥ ३४ ॥
अक्षयाय पुराणाय विष्णो सन्निहितो भव ।
यच्च ते परमं तत्त्वं यच्च ज्ञानमयं वपुः ॥ ३५ ॥
तत् सर्वमेकतो लीनमस्मिन् देहे विबुध्यताम् ।"
अनेन सन्निधीकृत्य देवं देवारिसूदनम् ॥ ३६ ॥
ब्रह्मादिपरिवारांस्तु स्वनाम्ना स्थापयेत् पृथक् ।
आयुधान्यस्य मन्त्रैस्तु नमोऽन्तैः स्थापयेद् बुधः[32] ॥ ३७ ॥
ततः[33] संदर्शयेत् पश्चात् स्वकां मुद्रां पृथक् पृथक् ।
सान्निध्यं तु पुनः कुर्यात् प्रणवेन प्लुतेन च[34] ॥ ३८ ॥
तस्मिन्नेव मुहूर्ते तु हर्षो वा भयमेव च ।
चक्षुर्भ्रमो विभ्रमो वा त्रासो वा जायते यदि ॥ ३९ ॥
व्यामोहः परमो वाथ[35] स्तनितं परमं तथा ।
अश्रुतानाश्रुतो वा स्याद् गात्राणां वाथ वेपथुः ॥ ४० ॥

[ग] अदोषपरमेष्ठ्यादीन्—D ; आदाय परमेष्ठ्यादीन् – Ver. ed. K. [27] निवेदयेत्—A. [28] सुरोत्तमम्—B, C. [29] नमस्तेऽस्तु—C. [30] This line is omitted in C.; ब्रह्मतेजोशालिने—F. [31] गुणानुत्क्रान्त—C. [32] गुरु—B, C. [33] स्थाप्य—B. C. [34] तु A. K. [35] परमोह्यो वा—A, D.

वैराग्यं नेत्रयोर्वा स्याद् दर्पः कन्दर्प एव च ।
परमो विस्मयो वाथ दिव्यो वा श्रूयते ध्वनिः ॥ ४१ ॥
दिव्यवादित्रघोषो वा गन्धर्वनगरस्य वा ।
दर्शनं जायते काले तस्मिन् सुरगणार्चिते[36] ॥ ४२ ॥
नरा नार्योऽथ दृश्यन्ते गायन्तोऽप्यथ हर्षिताः[37] ।
नन्दितूर्यरवो[38] वापि श्रूयते छन्दसां ध्वनिः ॥ ४३ ॥
दिव्यगन्धरसा वापि एकस्यापि भवन्ति हि ।
लिङ्गैरेतैर्विजानीयात् तस्मिन् सन्निहितं हरिम् ॥ ४४ ॥
प्रभा चैव विशेषेण ज्वलन्तीव च दृश्यते ।
स्फुरन्तीव च दृश्येत प्रतिमा च विशेषतः ॥ ४५ ॥
स्फुरन्निव जनः कश्चित् स्मयमान इव कचित् ।
वीक्षमाणो जनस्तत्र प्रहृष्ट इव लक्ष्यते ॥ ४६ ॥
एतैस्तु लक्षणैर्ज्ञेयस्तत्र सन्निहितो हरिः ।
विशेषादथवा पश्येच्छक्रचापोपमं कचित् ॥ ४७ ॥
छविं[39] वज्रप्रभां पश्येत् पद्मरागप्रभां तथा[40] ।
सौदामिनीप्रभां पश्येत् प्रतिमायां कचिद् यदि[41] ॥ ४८ ॥
एतैर्लिङ्गैस्तु बोद्धव्यस्तत्र सन्निहितो हरिः ।
बधिरा इव केचित् तु मूका इव तथापरे ॥ ४९ ॥
विभ्रान्ता इव केचिच् च जडा इव तथापरे ।
धावन्त इव केचित् तु पतन्त[42] इव चापरे ॥ ५० ॥
नृत्यन्त इव चाप्यन्ये मत्ता इव तथा यदि ।
चित्रस्था इव केचित् तु विवशा इव केचन ॥ ५१ ॥
भवन्ति तत्र चोन्मत्ताः प्रमत्ता इव चापरे ।
लिङ्गैरेतैस्तु बोद्धव्यस्तत्र सन्निहितो हरिः ॥ ५२ ॥

[36] °चिते—A. [37] भूषिताः—B, C. [38] नन्दितूर्यरवो—omitted in A, B.
[39] छविं—omitted in A, B. [40] यथा—A, B. [41] B, C. omit this line.
[42] तपन्त—B, C.

एवं यथावद् विधिना[43] कृत्वा सन्निहितं हरिम् ।[44]
कृत्वाष्टाङ्गनमस्कारं प्रणम्याञ्जलिमुद्रया ॥ ५३ ॥
सान्निध्यकरणाच्चाथ ऋत्विग्भिः सहितो गुरुः ।
स्तूयादुपनिषन्मन्त्रैर्ऋग्यजुःसामसम्भवैः ॥ ५४ ॥
आरण्यकं पठेत् सर्वं पञ्चोपनिषदस्तथा ।
स्तुत्वा स्तोत्रैस्तु पौराणैर्जपेदष्टाक्षरं ततः ॥ ५५ ॥
जप्त्वाष्टाक्षरमन्त्रं तु निर्गत्य द्वारसंस्थितः ।
चण्डप्रचण्डौ द्वारस्थौ निर्गम्याभ्यर्चयेद् गुरुः ॥ ५६ ॥
अग्र[45]मण्डपमासाद्य गरुडं स्थाप्य पूजयेत् ।
दिगीशानथ दिग्देशान्[46] स्थाप्य संपूज्य देशिकः ॥ ५७ ॥
विष्वक्सेनं तु संस्थाप्य मूलमन्त्रेण पूजयेत् ।
तथा शङ्खं च चक्रं च पूजयेन् मन्त्रवित्तमः ॥ ५८ ॥
विष्णुं च पार्श्वदेवांश्च[घ] सर्वेभ्यो बलिमाहरेत् ।
एवं कृत्वा गुरुः सम्यक् शुक्लाम्बरधरः शुचिः । ५९ ॥
शतमष्टोत्तरं जप्त्वा देवं तमभिवादयेत् ।
प्रणाममुद्रया पश्चादष्टाङ्गं प्रणिपत्य च ॥ ६० ॥
नृत्यं वाद्यं च गेयं च नाट्यं चापि प्रकाशयेत् ।[47]
मण्डले कमले वापि स्थापयित्वा गुरुं यजेत् ॥ ६१ ॥
प्रियप्रश्नैः क्षमाप्यैनं विष्णुवत् पूजयेद् बुधः ।
पादयोः प्रणिपत्याथ[48] दक्षिणां च निवेदयेत् ॥ ६२ ॥
आचार्यदक्षिणां दद्यात् नगरं ग्राममेव च ।
सुवर्णं रजतं वस्त्रं गावश्चैव समलंकृताः ॥ ६३ ॥

[43] बोधेन—C, D. [44] A omits this line. [45] अथ—B, C. [46] देवेशान्—B, C.; दिग्देवान् –D. दिगीशान् दिशि देवांश्च—K; [घ] विष्णुपरिषदेभ्यश्च –K. [47] उल्लासं चापि कारयेत् -B, C. [48] प्रणिपत्याह—A, B,; प्रणिपत्य वै—C.

दक्षिणां विधिवद् दत्त्वा दद्यादाभरणादिकम् ।
यागोपयोगद्रव्याणि सर्वाण्यस्मै निवेदयेत् ।। ६४ ।।
स्नानीयमण्डपोपेतं सर्वोपस्करणादिकम् ।[49]
मूलयज्ञगृहं दद्यादाचार्याय तथा परम् ।। ६५ ।।
आचार्यदक्षिणार्धं तु प्रदद्याद् ब्रह्मदक्षिणाम् ।
मूर्तिपान् पूजयेत् पश्चाद्गोवस्त्राभरणैर्द्विज ।। ६६ ।।
सर्वांस्तु पूजयेत् तत्र वैष्णवानागतान् द्विजान् ।
भोजयेद् ब्राह्मणान् पश्चादव्यापारमतन्द्रितः[घ] ।। ६७ ।।
प्राङ्मुखं यजमानं तु स्थापयित्वा यथाविधि ।
फलं समर्पयेत् तस्मै परितुष्टमना गुरुः ।। ६८ ।।
यज्ञः सुपुष्कलः सर्वः कर्तव्यो धर्मलिप्सया ।
मन्त्रहीनो गुरुं हन्याद् राष्ट्रमन्नेन वर्जितः ।। ६९ ।।
धर्मं च यजमानं च हन्याद् दक्षिणया विना ।
अयं साधारणः प्रोक्तः प्रतिष्ठापञ्चको मया ।। ७० ।।
सर्वेषामेव देवानामेष साधारणः स्मृतः ।[50]
यो विष्णुं स्थापयेद् देवं सर्वलोकनमस्कृतम् ।। ७१ ।।
स्थापितं तेन सर्वं स्याज् जगत् स्थावरजङ्गमम् ।
अतीतान् दशपूर्वांस्तु तथैवानागतान् दश ।। ७२ ।।
आत्मानं सपरीवारं विष्णुलोकं नयेन्नरः ।
कोटिजन्मगतं[51] पापं स्वल्पकं यदि वा गुरु[52] ।। ७३ ।।
तत्सर्वं भस्मसात् कुर्यात् संस्थाप्य मधुघातिनम् ।
— — — — — — — — ।। ७४ ।।

।। ३९ ।। इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे एकोनचत्वारिंशत्तमः प्रतिष्ठापटलः ।। ३९ ।।

[49] C. here repeats the first hemistich of verse 62. [घ] मताश्रित—Var. ed. [50] this line is omitted in B, C. [51] "जन्मकृतं—C. [52] बहु—C.

चत्वारिंशत्तमः पटलः

श्रीभगवान् उवाच

अतःपरं प्रवक्ष्यामि यज्ञस्यावभृथं[1] तव।
शोधयेद् गोमयैर्विप्र यागस्थानं तु सर्वतः॥ १॥
सिक्त्वा गन्धोदकेनाथ पञ्चगव्येन शोधयेत्।
विकिरैः[2] शोधयेद् भूमिं वितानेन विभूषयेत्॥ २॥
पुष्पदामैरधश्चोर्ध्वं पार्श्वतश्चापि शोधयेत्।
जुहुयाद् वैष्णवे वह्नौ घृतमष्टोत्तरं शतम्॥ ३॥
"विष्णोर्नुकि" (?)* ति मन्त्रेण समिधोऽष्टशतं तथा।
वेद्यामालिख्य विधिना एकाशीतिघटान्[3] बुधः॥ ४॥
वैष्णवं कलसं मध्ये "आजिघ्र" ति निवेशयेत्।
एकाशीतिपदे कुम्भान् श्रीसूक्तेन निवेशयेत्॥ ५॥
"शन्नो देवी" ति मन्त्रेण कलसानभिमन्त्रयेत्।
कलसे विन्यसेत् पञ्चगव्यं मन्त्रैर्विशेषतः॥ ६॥
फलं पुष्पं[4] न्यसेत् तत्र[5] द्रावितं कदलीजलम्।
मन्त्रयीत ह्यश्वत्थं तद् "याः फलिनी"ति सत्तम॥ ७॥
ऐक्षवं च रसं विद्वान् "या दिव्ये"ति निवेशयेत्।
गन्धतोयं[6] न्यसेन्मध्ये नवकानां सुरोत्तम॥ ८॥
"तवत् समे" त्वृचा[7] विद्वान् वस्त्रपूतं समाहितः।
नदीनदतडागोत्थैः शेषांस्तोयैः प्रपूरयेत्॥ ९॥
अपराजितमन्त्रेण सर्वानेवाभिमन्त्रयेत्।
नवेन शुक्लवस्त्रेण सर्वानेवाभिवेष्टयेत्॥ १०॥

[1] ···भृत—A, B, C, D, E, F. [2] विविधैः C. *विष्णोर्नुगिति—E, F, [3] ·घटान् —B, C; ·पदं—D. [4] तोयं—B, C, E, F, [5] विप्र—B, C. [6] मन्त्रतोयं –A. [7] This line is mutilated. C. starts with विद्वान् while A, B. have इतृचा before it. तवत् इतृचा—D.

गायत्रीं वैष्णवीं जप्त्वा मूलमन्त्रशतं जपेत् ।
जप्त्वा ध्यायन् हरिं सम्यक् प्रविश्याभ्यन्तरं शुचिः ॥ ११ ॥
"कृष्णोऽसी"ति च निर्माल्यं विष्वक्सेनाय निक्षिपेत् ।
अर्घ्यं दत्त्वा शुद्धवत्या शुद्धतोयेन सेचयेत् ॥ १२ ॥
"अग्निर्मूर्धे" त्युदग्जलैः स्थाप्य[8] स्नानं समारभेत्[9] ।
गोमूत्रेण हरिं क्षाल्य गोमयेन विलेपयेत् ॥ १३ ॥
क्षीरेण स्नापयेत् पश्चात् दध्ना च[10] तदनन्तरम् ।
घृतेन स्नाप्य विधिना धूपं दद्यात् तु गुग्गुलुम्[11] ॥ १४ ॥
प्रक्षाल्य को[12]ष्णतोयेन फलतोयेन सेचयेत् ।
स्नापयेत् कदलीतोयैस्ततस्त्विक्षुरसेन च ॥ १५ ॥
यैर्मन्त्रैर्मन्त्रयेत् तोयं तैर्मन्त्रैः स्नपयेद्धरिम् ।
"पञ्चनद्य" इत्यृचा पश्चान्नदीनदतडागजैः[13] ॥ १६ ॥
स्न[14]पयित्वा विधानेन वस्त्रयुग्ममुपाहरेत् ।
कार्पासं पट्टसूत्रं वा कौषेयं वाथ भूषितम्[15] ॥ १७ ॥
"बृहस्पते"ति मन्त्रेण परिधाप्यार्चयेत् क्रमात् ।
गन्धादिभिः समभ्यर्च्य पार्षदान् पूजयेत् ततः ॥ १८ ॥
निवेदयीत नैवेद्यं भोज्यं भक्ष्यं सुपुष्कलम्[16] ।
पेयं चोष्यं तथा लेह्यं प्रभूतं द्विजसत्तम ॥ १९ ॥
बलिं विनिक्षिपेत् पश्चाद् दिशासु विदिशासु च ।
"ॐ नमः पार्षदादिभ्यो"[17]ऽथ बलिं पीठे विनिक्षिपेत् ॥ २० ॥
ततः प्रदक्षिणीकृत्य मण्डलं[18] ब्राह्मणेन तु ।
प्रविश्य भवनं भूयः स[19]र्वमारण्यकं पठेत् ॥ २१ ॥

[8] स्नाप्यं—A, B. [9] निवेशयेत्—C. [10] दधिना—A, D. [11] सगुग्गुलुम्—B, C. [12] चोष्ण—B, C. [13] तथागतैः—A. [14] स्ना—B, C. [15] वा विभूषितम्—B.; वा विभूष्येत्—C. [16] सुपेशलम्—B, C. [17] पारिषदेभ्यो—B, C.; पार्षदेभ्योऽथ—D.; पार्शदेभ्यो बलिं—F [18] मण्डल—A, D, [19] पर्व—A.

पौराणैश्च स्तवैः स्तुत्वा महापुरुषपूर्वकैः ।
दण्डवत् प्रणमेत् पश्चात् नृत्यगीतादि कारयेत् ॥ २२ ॥
दद्यात् सुवर्णं गां वस्त्रं दक्षिणां देशिकाय तु ।
वैष्णवान् पूज्य शक्त्या तु ब्राह्मणेभ्यश्च दक्षिणाम् ॥ २३ ॥
आचार्यं तोष्य यत्नेन सन्ध्यायां बलिमाहरेत् ।
— — — — — — — — ॥ २४ ॥

॥ ४० ॥ इति हयशीर्षे महापञ्चरात्रे द्वादशसाहस्रिके
आदिकाण्डे चत्वारिंशत्तमः अवभृथ*स्नानपटलः ॥ ४० ॥

## एकचत्वारिंशत्तमः पटलः

श्रीभगवान् उवाच —

अतःपरं[1] प्रवक्ष्यामि विस्तरं बलिकर्मणाम् ।
संपाद्य वैष्णवे वह्नौ क्रमादन्नं चतुर्विधम् ॥ १ ॥
सोपदंशं[2] घृतेनाक्तं कृतं वा लौकिकेऽनले[3] ।
भूमौ मण्डलिकं[4] कृत्वा प्रोक्ष्य बर्हिः प्रकल्पयेत्[5] ॥ २ ॥
स्थानं[a] ताम्रमयं तत्र समानीय निवेशयेत् ।
तस्मिन् प्रकल्पयेत् पीठं हविषा[b] विधिना सुधीः ॥ ३ ॥
परमेष्ठ्यात्मिकां[क] शक्तिं तन्मध्ये विन्यसेत् ततः[6] ।
दीक्षाभिः पुरुषाभिश्च चतुर्भिर्बलिसंयुताम्[7] ॥ ४ ॥

*mss. read अवभृत ।

[1] तया—A.; यथापूर्वं—F. [2] सापदंशं—A, B. [3] ···न तु—B. [4] च मण्डलं—B, C भूमौ मण्डलिकां—F. [5] प्रकीर्णयेत्—B, C. [a] खनिं—F.; थानं—E. [b] अनेन—F [क] ·त्मिकीं—D, F. [6] बुधः—B, C. [7] This line is omitted in A, B.; दीक्षाभिर-पुरुषाभिरचतुर्भिरभिसंयुताम्—D.; दिक्स्थाभिः पुरुषाख्याभिश्चतुर्भिरभिसंयुताम्—F.

तन्मध्ये स्थापयेद् गर्भ[8] चक्रं वाथ[ख] सुदर्शनम् ।
दीक्षितस्य द्विजातेस्तु[ग] तत्पात्रं शिरसि न्यसेत् ॥ ५ ॥
शेषमन्नं तु संगृह्य दद्या[घ]दन्योन्यभाजने ।
घण्टां च धूपपात्रं च गृह्यान्यस्तत्र गच्छति[ङ] ॥ ६ ॥
सुमनोभिर्जलैर्युक्तं पात्रं गृह्यापरो[9]व्रजेत् ।
चन्द्रांशुविमलं छत्रं धारयेदपरः शुचिः ॥ ७ ॥
मृदङ्गभेरीपटह[10]काहलाशङ्खनिःस्वनैः ।
नर्तकैर्गायकैश्चैव वंशवाद्यैर्मनोहरैः ॥ ८ ॥
चामरासक्तहस्ताभिर्दिव्यस्त्रीभिर्विशेषतः ।
पताकाभिर्विचित्राभिर्वितानैर्विविधैस्तथा ॥ ९ ॥
निर्गच्छेद् देशिकस्तत्र यावद् द्वारं समाहितः ।
प्राप्य द्वारं द्वारपालौ पूजयित्वाऽथ[च] धूपयेत् ॥ १० ॥
प्रक्षिपेच्च बलिं तत्र ध्यात्वानन्तं सुरेश्वरम्[11] ।
वैनतेयं विघ्नराजं ततः पश्चात् तु दिक्पतीन् ॥ ११ ॥
इन्द्रादीन् अर्चयित्वा तु बलिशेषं विनिक्षिपेत् ।
प्राकाराद् बाह्यदेशं तु निर्गम्य [छ]प्रक्षिपेद् बलिम् । १२ ॥
गोमयेनोपलिप्तेषु भूप्रदेशेष्वथाष्टसु ।
कुमुदादींस्तु संस्थाप्य[12] पूजयित्वा बलिं हरेत् ॥ १३ ॥
कोटिसंख्यगणैर्युक्तान्[13] पूज्य पश्चाद् बलिं हरेत् ।
कुमुदं कुमुदाक्षं[ज] च पुण्डरीकं च वामनम् ॥ १४ ॥
शङ्कुकर्णं सर्वनेत्रं सुमुखं सुप्रतिष्ठितम् ।
प्रत्येकं नृत्य[14]गीताद्यैरेकैकं तोषयेद् गुरुः[झ] ॥ १५ ॥

[8] गर्भं is omitted in A, B.;...स्थापयेदर्चां—D. देवं—K. [ख] चाथ—D. [ग] द्विजातेश्च—K. [घ] यायादन्योन्य—D, E, F. [ङ] गृह्यान्यस्त्वनुगच्छति—K. [9] पुरौ—A; पुरो—D. [10] पटहैः—A, D. [च] तु—K. [11] महेश्वरम्—A, D, K. [छ] ततः प्राकाराद् बाह्यदेशं निर्गम्य—A, B. [12] संपूज्य—C. [13] ...युतैः—C; युताः—A, B. [ज] कुमुदाख्यं—K. [14] नृत्यगेयाद्यैः—A. [झ] बुधाः—K.

बलिपीठं ततः प्राप्य तोयेन क्षालयेत् सुधीः।
"नमोऽस्तु पार्षदेभ्योऽथ" इति मन्त्रं समुच्चरन्॥ १६॥
प्रयच्छेत् तु[15] बुधो यत्नाच्छेषमन्नं जलप्लुतम्।
तदाचम्य शुचिर्भूत्वा देवागारं प्रविश्य च[16]॥ १७॥
मन्त्रेण स्नाप्य[अ] तां मूर्तिं पादपीठे निधापयेत्।
मन्त्रान् संहृत्य विन्यस्तान् निर्माल्यं प्रक्षिपेत् ततः॥ १८॥
विष्वक्सेनाय देवाय बलिः[17] साधारणस्त्वयम्।
बलिदानक्रियाद्येषु सर्वकर्मसु कारकः॥ १९॥
देशिकाय प्रदद्यात् तु गां च वस्त्रं सकाञ्चनम्।
पुनरन्यप्रकारेण सविशेषं बलिं शृणु॥ २०॥
पूर्ववत् पात्रमानीय तथैवान्नं चतुर्विधम्।
अष्टाङ्गुलोच्छ्रितं कुर्यात् सूचाग्रं[ट] पञ्चविस्तृतम्॥ २१॥
विन्यसेत् काञ्चनं रूप्यं पूर्वोक्तविधिना बुधः।
वासुदेवं ततो न्यस्य न्यसेन्मासाधिपांस्ततः[18]॥ २२॥
गन्धाद्यैस्तानर्चयित्वा पूर्ववन्निर्गमक्रिया।
पूर्वोक्तेनैव मन्त्रेण[19] बलिदानं ततस्ततः॥ २३॥
आचम्य[20] दर्शयेद् यत्नाद् बलिं देशिकसत्तमः।
तोषयेत् पूर्ववद् यत्नाद् गीतनृत्यैस्तु तान् सुरान्॥ २४॥
भ्रामयित्वा तु [ठ]शनकैः प्रविशेद् देवसन्निधौ।
पूर्ववत् संहरेन् मन्त्रान् न्यस्तान् वै[21]देशिकोत्तमः॥ २५॥
विष्वक्सेनाय संक्षिप्य[22] निर्माल्यं निक्षिपेत् ततः।
एवंविधो बलिर्नित्यं भगवद्वाञ्छितः[23] सदा॥ २६॥

[15] प्रयच्छेत—A, D. [16] तु—B, C. [अ] स्थाप्य—A, B, C, D. [17] तथा—C; बलिं साधारणं क्षिपेत्—K. [ट] चक्रकं—K. [18] स्तथा—B, C. [19] पूर्वोक्तेन क्रमेणैव—C, K. [20] आनाय्य—C.; आचार्य—F.; आन्धोन्यं—D. आचम्य—omitted in A, B. [ठ] एवं भ्रमित्वा—K [21] तान् एव—B, C. न्यस्याद् व—K. [22] निक्षिप्य—A, D. [23] एवंविधं बलिं नित्यं भगवद्वाग्नि सर्वदा K.

कार्यः प्रतिष्ठादिवसमारभ्यानुदिनं[24] नरैः ।
— — — — ॥ २७ ॥

॥ ४१ ॥ इति हयशीर्षे[ङ] महापञ्चरात्रे द्वादशसाहस्त्रिके
आदिकाण्डे एकचत्वारिंशत्तमः बलिदानपटलः ॥ ४१ ॥

## द्विचत्वारिंशत्तमः पटलः

श्रीभगवान् उवाच—

अतःपरं प्रवक्ष्यामि द्वारस्य[1] सुरसत्तम ।
प्रतिष्ठां विष्णु[2]सायुज्यद्वारभूतां यथाविधि ॥ १ ॥
सुवर्णं तु[क] अधो दत्त्वा प्रतिद्वारं निवेशयेत् ।
तदा प्रतिष्ठिते विष्णौ प्रतिष्ठा द्वारजा भवेत् ॥ २ ॥
द्वारबन्धं[3] विना यत्र वासुदेवः प्रतिष्ठितः ।
तदा पश्चाद् बुधैः कार्या प्रतिष्ठा द्वारजा द्विज ॥ ३ ॥
अथ कृत्वा द्वारबन्धं[4] प्रतिष्ठा क्रियते नरैः ।
अत्रादौ[5] विधिवद् द्वारप्रतिष्ठां कारयेद् बुधः ॥ ४ ॥
शाखोदुम्बरकौ सिच्य[6] अष्टभिः कलसैः शुभैः ।
रत्नौषधियुतौ विप्र वस्त्र[7]युग्मेन वेष्टयेत् ॥ ५ ॥
गन्धादिभिः समभ्यर्च्य मन्त्रैर्वेदादिभिर्गुरुः ।
"धूरसी" ति च संधूप्य नैवेद्यं विनिवेदयेत्[8] ॥ ६ ॥

[24] ...दिवं —B, C. [ङ] हयशीर्षप्रोक्ते —K. [1] श्रीवासा —C. [2] विष्णुं—A, B.; द्वारं—C. [क] सुवर्णानि—A, B, C, D. [3] ...यन्त्रं—C. [4] ...यन्त्रं—C. [5] अथादौ—C. [6] शाखोत्वसुकौ विप्र —C...विप्र—D, F. [7] स्नाप्य—C. [8] विनिवेशयेत्—C.

कुण्डेषु होमयेद् वह्निं समिल्लाजतिलादिभिः ।
गोपुरं वर्धयेद्[ख] यत्नात् पदान्त[9]स्थामरैः पदैः ॥ ७ ॥
तत्रार्चयेत् सुरौ द्वौ द्वौ प्रागादिषु यथाक्रमम् ।
इन्द्रसूर्यादियोगेन मध्यगौ[10] द्विजसत्तम ॥ ८ ॥
कुशपुष्पाक्षतैर्भक्त्या* शय्यादीनि[11] च दापयेत् ।
आधारशक्तिं तत्राधो न्यसेद् देशिकसत्तमः ॥ ९ ॥
शाखयोर्विन्यसेन् मूले देवौ चण्डप्रचण्डकौ ।
ऊर्ध्वोदुम्बरके[12] देवीं लक्ष्मीं सुरगणार्चिताम्[13] ॥ १० ॥
न्यस्याभ्यर्च्य यथान्यायं श्रीसूक्तेन द्विजोत्तमः ।
होमयेत् श्रीफलैः साष्टशतं घृतपरिप्लुतम् ॥ ११ ॥
"आदित्यवर्णे" त्यनया ऋचा मूलेन वा द्विजः ।
ततः[14] पूर्णाहुतिं दत्त्वा भोजयेद् वैष्णवान् द्विजान्[15] ॥ १२ ॥
सुवर्णशृङ्गीं विधिवत् प्रदद्यात् सुसमाहितः ।
तथैवाभरणं भक्त्या दद्यात् सर्वाङ्गिकं शुभम् ॥ १३ ॥
एवं सन्तोष्य विधिवत् प्रियप्रश्नेन चैव हि ।
आचार्यदक्षिणां दत्त्वा[16] मूर्तिपान् अपि पूजयेत् ॥ १४ ॥
गोहिरण्यादिदानेन प्रियप्रश्नेन सर्वथा ।
एवं कृत्वा ततः पश्चात् नृत्यं गेयं च[17] कारयेत् ॥ १५ ॥
एषा संक्षेपतः प्रोक्ता प्रतिष्ठा ते मयानघ ।
पूर्वमेव[18] स्थापितस्य द्वारस्य कमलोद्भव ॥ १६ ॥
आदौ देवप्रतिष्ठा स्यात् पश्चाद् द्वारस्य कारयेत्[19] ।
तत्र संप्रोच्यमानं मे[20] विशेषं शृणु पद्मज ॥ १७ ॥

[ख] वर्तयेद् -K. * कुशपुष्पादिभिभक्त्या—F. [9] पादान्त C. [10] मध्यमौ—C, F. [11] शक्त्यादीनि—C. [12] ऊर्ध्वोदुम्बरके is omitted in C. [13] . चितम् C. [14] अतः -B, C. [15] वैष्णवान् भोजयेद् द्विजान् –A, B, F. [16] दद्यात् B, C. [17] गीतं च—B, C. नृत्यगीतं—K. [18] . मेवास्थापितस्य -A. [19] आदौ द्वारप्रतिष्ठा स्यात् पश्चाद् द्वारस्य कारयेत् —B, C, D.; आदौ द्वारप्रतिष्ठा स्यात् पश्चाद् देवस्य कारयेत् F. ...देवस्य वा भवेत् -K [20] तत्रैव प्रोच्यमानस्य—B.; तत्रैव प्रोच्यमानं मे—C. तत्रेदं प्रोच्यमानं –K.

